त्वं तत्र स्यादकर्मकाद्भावे कर्तरि चेत्याद्यर्थः सुलभ इति भट्टपादोक्तयोजनिका निर्बाधैवेति चेत् । अत्राहुः । लङित्यस्य षष्ठंतत्वे आदेशानामेवार्थ उक्तः स्यात्सोपि तिबादीनामेव न तु शानादीनाम् तेषां द्विवचनादिसंज्ञाविरहात् द्वेयकयोरित्यादिनास्यैकवाक्यताया भवद्भिरुक्तत्वात् । न च भवदुक्तरीत्या कर्तरि कृदित्यनेन निर्वाहः भावे कर्मणि च शानचो दौर्लभ्यापत्तेरुक्तत्वात् । न च शानच् विधिना मत्वात्मनेपदव्यवस्थापकानामेकवाक्यतया भावकर्मणो रित्यनेनेष्टसिद्धिं मक्षर्मकादपिभावे शानजापत्तेः । किं च जसंतत्वे श्रुतेनैव संबंधषष्ठ्यंतत्वे त्वादेशइत्यध्याहारान्गौरवमित्यादि । अत्रेद बोध्यम् ॥ भावे चाकर्मकेभ्य इति अकर्मकग्रहणेनाविवक्षितकर्माणोपि गृह्यते ॥ अत एव णेरणाविति सूत्रे नेह पच्यते नेह भुज्यते इति भावे लकार इति हरदत्तः ॥ अत्यंताविद्यमानकर्मकाणामेव ग्रहणम् ॥ नेह पच्यत इत्यादौ तु कर्मण्येव लकारः गम्यमानत्वाच्च कर्म न प्रयुज्यते इति मतांतरमेतच्च गतिबुद्धीत्यादिसूत्रे हरदत्तग्रन्थे स्पष्टम् ॥ यत्तु कैश्चिदुक्तमिह अविहितकर्मणां भावेलकार इति प्रमादकृतोक्तं भाष्यादिविरोधादयुक्तमिति तच्चिंत्यम् ॥ पक्षद्वयस्यापि भाष्यकैयटादिग्रन्थारूढत्वात् प्रत्युताविवक्षितकर्माणोऽप्यकर्मका इति पक्ष एव प्रबलः । तथाहि समानकर्तृकेषु तुमुन् इति सूत्रे इष्यता क्रियते इति भावे लङुक्तो हरदत्तेन ॥ णेरध्ययने वृत्तमिति कैयटहरदत्तादिभिरपि नपुंसकेभावेक्तोऽकर्मकेभ्य एव । तयोरेव कृत्यक्त खलर्थाः इत्यत्र क्तमात्रग्रहणात् ॥ तत्र भावे चाकर्मकेभ्य इत्यनुवर्त्तनात् । अन्यथा घट कृतमिति प्रसज्येतेति सिद्धान्तितम् ॥ एवंस्थिते यद्यपि विवक्षितकर्माणोपीह सूत्रे अकर्मकग्रहणेन न गृह्येरन् तर्हि पीतागावो भुक्ता ब्राह्मणा इत्यादौ भावे क्तांतादर्शआद्यजित्यादिकर्मण्युक्त इति सूत्रे हरदत्तेन वक्ष्यमाणं कृतपूर्वी त्यत्र भावेक्त इति कैयटाद्युक्तं च कथं संगच्छतां कथं च गततिरश्चीनमित्यादिप्रयोगाः संगच्छेरन् । गतिबुद्धीति सूत्रे त्वकर्मकग्रहणेना विवक्षितकर्माणो न गृह्यन्ते इत्युक्तम् । तेनाणौयः कर्त्तासण्यंते कर्म न भवतीति देवदत्तेन पाचयति इति सिद्धम् ॥ गत्यर्थसूत्रेपि न गृह्यते तेन हि सूत्रे कर्त्तर्यपिक्तो विधीयत इति दत्तवान् पक्ववानित्याद्यर्थे दत्तः पक्वइत्याद्यापत्तेः । इह सूत्रे त्वविवक्षितकर्मणामकर्मकत्वेन ग्रहणे न कोपि दोष इत्यास्तांतत् । लस्य-वर्णग्रहणे प्रत्ययग्रहणपरिभाषा अर्थवद्ग्रहणपरिभाषा च न प्रवर्तते इति लुनाति चूडाल इत्यादौ तिबाद्यादेशः कुतो न भवतीति चेत् । अत्राहुः ॥ ल. कर्मणीति सूत्रे निर्दिष्टानां कर्त्राद्यर्थाना मनुवृत्तेः । कर्त्राद्यर्थे विहितस्य लकारस्य

ग्रहणमिति अतोपि ति बाद्यादेशानुवादेन कर्त्राद्यर्थविधिरितिकल्पना नि-रस्ता लस्थानिकतिबादीनां कर्त्राद्यर्थविधाने कर्त्राद्यर्थे विहितस्य लस्य ति-बादिविधानमित्यन्योन्याश्रयापत्तेः । यद्वा धातोरित्यधिकाराद्धातोर्विहितस्यै-व लस्येहग्रहणमिति नोक्तातिप्रसंगः । लस्येत्सञ्ज्ञा तु न भवति । फला-भावात् । न च लित्स्वरः फलं । णलोलित्वेन तदभावस्य ज्ञापनात् ॥ ना-प्यश्रवणमेव फलं । तदुच्चारणस्यानर्थक्यापत्ते रादेशविधिनैवाश्रवणलाभाच्च । ल-स्यतिबादिस्थानित्वाभ्युपगमे तु लः परस्मैपदमित्यादिसूत्रसतः संगच्छत इति दिक् ॥ तिप्तस् झि ॥ समाहारे द्वन्द्व । इट इकार आगमलिंगं न भवति ॥ सप्तदशभिरादेशैः समभिव्याहारात् ॥ किंतु इटोदिति विशेषणार्थः परदित्युच्य-माने एधे व एधेहि एधेमहीत्यत्रापि स्यात् ॥ वर्णग्रहणेप्रत्ययग्रहणार्थवद्ग्रहणप-रिभाषयोरप्रवृत्तेः ॥ केचित्तु इटोदित्यत्र लिङ इत्यनुवर्तनाल्लिङादेशस्येति सामा-नाधिकरण्येन व्याख्याने एधेव एधेहि एधेमहीत्यादावति प्रसंगोनास्त्येव ॥ नहि तत्र इकारमात्रमादेशो भवति तेनेटोदित्यत्र टकारः स्पष्टप्रतिपत्त्यर्थ ॥ एवेत्याहुः तच्चिन्त्यम् । इकारस्य विशेषणत्वे विशेषणेन तदन्तग्रहणादिवर्णान्तस्य लिङो ऽत्स्यादित्यर्थप्रसक्त्यतिप्रसंगस्य तदवस्थत्वात् । वहिमहीत्यस्यापि स्थानिवत्वे लिङ्त्वात् ॥ महिङोङकारस्तङ्तिङिति प्रत्याहारार्थः । स च समुदायानुबन्धो नत्ववयवानुबन्धो व्याख्यानात् । तेनेषिः कर्मणि आशीर्लिङि एषिषीमहीत्यत्र गुणनिषेधोन ॥ तथाव्रश्चतेः पृच्छतेश्चकर्मणिलिटि वव्रश्चिमहेपप्रच्छिमहे इत्यत्र ग्रहिज्येति संप्रसारणं न ॥ तङानौ ॥ लस्येत्यस्यानुवृत्ते र्लादेशएवानोगृह्य तेइत्या-शयेनाह ॥ शानच्कानचौ चेति ॥ तेन परस्मैपदिभ्योपि ताच्छील्यवयोवचनेति चानश् भवत्येव । कतीह निघ्नानाः ॥ अनुदात्तङितः ॥ अनुदात्तश्च ङश्च अनु-दात्तङौ तौइतौ यस्य सः अनुदात्तङित् ॥ द्वन्द्वान्तेश्रूयमाणइच्छब्दः प्रत्येकं संबध्यते दतत्रानुदात्तांशेतततविधेः फलाभावात् अशान्तरे एव तदन्तग्रहणमित्याशये-नाह ॥ अनुदात्तेतइत्यादि ॥ उपदेशेजनुनासिकइत्यतो ऽनुवृत्तमुपदेशग्रहणम-पि ङिदंशे एव संबध्यते नान्यत्र अव्यभिचारात्तदाह ॥ उपदेशेयोङिदिति ॥ विशिष्यमन्तरेण तदन्तविधिरिह दुर्लभ इत्यतआह ॥ धातोरिति । हलस्येति । नन्विहानुवृत्ते रभावादुभयमपि दुर्लभम् भूवादयइति सूत्रान्मण्डूकप्लुत्याऽनुवृत्तस्य धातवइत्यस्य विभक्तिविपरिणामात्कथं चिद्धातोरिति पदे लब्धेपि लस्येत्येतद्ल-लभ्यत इति चेत् ॥ अत्राहुः ॥ इकोझलित्यसपनाधातोरिवेहात्मनेपदे नलका रधात्वोराक्षेपो बोध्यः ॥ तिङां लादेशत्वाल्लस्य च धातोर्विधानादिति ॥ उपदेशे-

इति किं ॥ चुकुटिषति ॥ गाङ्कुटादिभ्य इति सन आतिदेशिकं ङित्वम्। धातोः किं। चङ्ङभ्यां मा भूत् ॥ अदुद्रुवत् ॥ अवोचत् ॥ ननु लावस्थायामेववृतादिभ्यः स्यतासीत्यादिनास्यप्रत्यये कृते व्यवधानादात्मनेपदपरस्मैपदरूपनियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरंगत्वात्स्य प्रत्ययात्पूर्वमेव लस्यति वादिषु सत्स्य,परस्मैपदं पक्षे चात्मनेपदं स्यादेवेति इङ्गः स्यसनोरिति सूत्रे स्यग्रहणं व्यर्थं सत्तेनैव स्यग्रहणेन विकरणेभ्यो नियमो बलीयानिति ज्ञापितं ॥ तेनानुदात्तेत्वाद्वर्त्स्यत इत्येवं नियमात्मनेपदेप्राप्ते इङ्गः स्यसनोरिति परस्मैपदमपि पक्षे भवति। तथा च विकरणेभ्यो नियमस्य बलीयस्त्वाच्चङ्ङोर्नदोषः विकरणात्प्रागेव परस्मैपदप्रवृत्तेरिति चेत् ॥ सत्यम् ॥ स्यग्रहण विकरणव्यवधानेपि नियमप्रवृत्तिं ज्ञापयतीति पक्षे चङ्ङोर्दोषः स्यादेव। अयं च पक्षः अदेः शित इति सूत्रे भाष्यकैयटयोः। स्पष्टः किं च तदन्तविधिलाभार्थमपि धातुग्रहणमावश्यकम् ॥ धातोरेकाच इत्यादिनायङ् । बोभूयते ऋतेरीयङ्। ऋतीयते । शीङ्, त, इत्यत्र तु व्यपदेशिवद्भावेन ङिदन्तत्वम् ॥ नमोवरिवश्चित्रङइति क्यचि चित्रीयते इत्येतत्कथमिति चेत् ॥ अत्राहुः । अवयवेऽचरितार्थो ङकारः क्यजन्तस्य विशेषणं भवति ॥ तथा च समुदायानुबन्धो ङकार इति व्यपदेशिवद्भावेनैव ङिदन्तत्वं बोध्यमिति ॥ स्वरितञित. ॥ पूर्ववदिच्छब्द. प्रत्येकं सबध्यते ॥ कर्त्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायम् ॥ कर्मव्यण् ॥ धातोरिति ॥ धातोर्लस्येत्यर्थः। लकारधात्वोराक्षेपः पूर्ववद्बोध्यः ॥ तिङस्त्रीणित्रीणि ॥ तिङः षट्त्रिकाः संज्ञास्तिस्र इति यथासंख्यं न प्राप्नोतीत्यत आह ॥ उभयोरिति ॥ परस्मैपदमात्मनेपदमिति चानुवर्त्तते तेन पदद्वये प्रत्येकं त्रयस्त्रिका इति यथा संख्यं संज्ञाः प्रवर्त्तत इति भावः ॥ ननु प्रथमश्च प्रथमश्च प्रथमौ मध्यमश्च मध्यमश्च मध्यमावित्येवं कृतैकशेषाणां प्रथमादीनां प्रथमौ च मध्यमौ चोत्तमौ च प्रथममध्यमोत्तमाइति द्वंद्वेभ्युपगते त्रिकद्वयस्य यथासंख्यं प्रथममध्यमोत्तमसंज्ञाः स्युः नत्वेवैकस्येति णलुत्तमोवेति सूत्रं विरुध्येत ॥ णलउत्तमसंज्ञकत्वालाभात् ॥ ततश्च प्रथममध्यमोत्तमा इत्यत्र कृतद्वंद्वानां प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमाश्चेत्येकशेष आश्रीयताम् ॥ तथा हि सति सञ्ज्ञा अपि षडिति परस्मैपदात्मनेपदग्रहणानुवृत्तिक्लेशं विनैवेष्टसिद्धिरिति चेत् । मैवम्। एकशेषाश्रयणे गौरवाद्वैयर्थ्याच्च ॥ त्वयापि हि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव ॥ अन्यथा शतृक्वसोः सावकाशापरस्मैपदसंज्ञा प्रथमादिसंज्ञयाबाध्येत ॥ ततश्च क्राम्यति क्रामतीत्यादौ क्रमः परस्मैपदेष्विति दीर्घो न स्यात् ॥ आक्रामन्नित्यादौ तस्य सावकाशत्वात् ॥ परस्मैपदा-

मामिति विहितस्य णलो णलुत्तमो वेति णित्वविकल्पविधानाज्ज्ञापकात् परस्मैपदसंज्ञा प्रथमादिसंज्ञया न बाध्यत इति ब्रूषे तर्हि सुतरां प्रतिपत्तिगौरवम् ॥ तान्येकवचन ॥ तानीत्यस्य व्याख्यानं लभ्येत्यादि ॥ अन्यथा एकसंज्ञाधिकारात्प्रथमादिसंज्ञानामेकवचनादिसंज्ञानां च पर्यायः स्यात् ॥ इष्टापत्तौ तु अत्ते लोटो मेर्निरिति कृते एकत्वविवक्षायामुत्तमसंज्ञाभावादाडुत्तमस्येत्यस्याप्रवृत्त्या आनीत्यादिप्रयोगोऽपि साधु स्यादिति भावः । प्रत्येकमिति । यत्तु प्राचा एकैकश इत्युक्तं तदयुक्तम् ॥ शसैव वीप्साया उक्तत्वेन द्विर्वचनायोगात् येन नाप्राप्तिन्यायेन द्विर्वचनापवादः शसिति सिद्धान्तात् ॥ तथा सुप इति सूत्रेऽप्येकैकश इति प्राचोक्तमयुक्तमेव ॥ एतच्च मनोरमाग्रन्थानुरोधेनोक्तम् ॥ अन्ये तु एकैकमेवैकैकशः स्वार्थे शस् नत्वत्र वीप्सायाम् ॥ न च स्वार्थे शस् स आकरग्रन्थान्नावगम्यत इति वाच्यम् । एकां कपिलामेकैकशः सहस्रकृत्वो दत्त्वेति भाष्यात् शसन्तस्य प्रत्येकमित्यर्थकत्वेन कैयटेन व्याख्यानं तिङ्वाच्यकारकवाचिनीति ॥ भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम् । स्थानिनीत्यस्य व्याख्यानाच्च स्वार्थिकस्यापि शसोऽवगम्यमानत्वात् ॥ ततश्च एकैकश इति प्राचोक्तमयुक्तमिति यदुक्तं तदेवायुक्तमित्याहुः ॥ युष्मदि ॥ सामानाधिकरण्य इत्यस्य व्याख्यानमप्रयुज्यमाने इति । सामानाधिकरण्ये किं ॥ त्वां पश्यति । त्वया क्रियते तुभ्यं ददाति ॥ प्रहासे च । मन्योपपद इति ॥ सप्तम्यंतस्यानुगुणत्वेन व्याचष्टे ॥ तस्मिन् प्रकृतिभूते सतीति ॥ तस्माद्धातोर्लस्य स्थाने इत्यर्थः ॥ अस्मदि ॥ तथा भूते इति । तिङ्वाच्यकारकवाचिनि प्रयुज्यमाने अप्रयुज्यमाने चेत्यर्थः ॥ तिङ् शित् सार्व ॥ धात्वधिकारोक्ताद् इति किं ॥ हरीन् । शसः सार्वधातुकमपिदिति ङित्वे घे ङितीति गुणः स्यात् ॥ लिहः श्रियः इत्यादिशसंतेषु सार्वधातुके यगिति यक् च स्यात् । केचित्तु वारिणी इत्यत्र नुमि कृतेऽपि लघूपधगुणः स्यादित्याहुस्तन्न ॥ क्ङितीति निषेधात् इगन्तत्वप्रयुक्तस्य नुमः गुणप्रयोजकत्वे सन्निपातपरिभाषाविरोधाच्च ॥ कर्त्तरि शप् ॥ सार्वधातुके यगित्यतः सार्वधातुक इत्यनुवर्त्तते धातोरेकाच इति सूत्रात् धातोरिति च तदाह ॥ कर्त्रर्थ इत्यादि ॥ झोऽन्तः ॥ तकारादकार उच्चारणार्थः । आयनेयीनीति सूत्रात्प्रत्ययग्रहणमनुवर्त्तते नत्वादिग्रहणमेकदेशे स्वरितत्वप्रतिज्ञानात् ॥ तस्यापि अनुवृत्तौ तु शयांते इति न सिध्येत् ॥ शीङो लेट् । लेटोडाटावित्यतरङ्गत्वादंतादेशात्प्रागटि कृते तस्यादित्वाभावात्तदनेन प्रत्युक्तम् । देतदाह ॥ प्रत्ययावयवस्येति ॥ प्राचा तु प्रत्ययादेर्झस्येत्युक्तं ॥ इह मनोरमायामादिग्रहणं निवृत्तमित्युक्तं तदापाततः ॥ अन्यत्र प्रवृत्तस्यादिग्रहणस्य निवृत्तत्वा-

योगात् ॥ निवृत्तमित्यस्यानतु वृत्तमित्यर्थं इति वा कथंचित् व्याख्येय ॥ यत्तु प्रत्ययादेरिति ग्रन्थसमर्थनाय व्याचक्षते । आडागमे कृते तत्सहितोपि प्रत्ययोस्तु नाम ॥ न तु तत्सहित एव प्रत्ययइति नियमोस्तीति तन्न ॥ अवयवविनिर्मुक्तस्यावयवित्वायोगात् । अन्यथा भूयास्तामित्यादौ तामादीनामिडागमापत्तेः । ननु अङ्गात्परस्य प्रत्ययस्य इट्यासुडत तु नाङ्गमिति चेन्न ॥ आगमविनिर्मुक्तस्यापि प्रत्ययत्वमिति वदतां मते भावमिभविष्यामीत्यादौ विकरणां तस्यैव तदादिग्रहणबलेन यासुट् तस्याप्यंगताया दुर्वारत्वात् ॥ किं च लविषीयेत्यत्र विशेषविहितत्वात्सीयुटि कृते लिङः स्थाने इट् तस्यागमेनादित्वविघातात्प्रत्ययाद्युदात्तत्वं न प्राप्नोतीत्याशंक्य प्रत्ययस्वरे कर्त्तव्ये आगमा अविद्यमानवदित्यतिदेश आद्युदात्तश्चेति सूत्रे भाष्यादौ स्वीकृतः ॥ न चैतत्केवलस्यापि प्रत्ययत्वे युज्यते ॥ न च तन्मते आगमसहितस्यापि प्रत्ययत्वादिकारस्याप्युदात्त स्यातद्वारणाय प्रत्ययस्वरे कर्त्तव्ये इत्यादिग्रन्थः स्वीकर्त्तव्यएवेति नास्त्यवकारग्रन्थविरोधइति वाच्यम् ॥ आगमा अनुदात्ताइति विशेषवचने नागमस्याप्यनुदात्तत्वे कृते आद्युदात्तत्वस्य तत्राप्रवृत्तेरिति दिक् । झस्येति ॥ हकारादकारउच्चारणार्थः । अतोगु इति ॥ अतो दीर्घोयञीति तु न प्रवर्तते ॥ स्थान्यत्वादेशविधौ स्थानिवत्वनिषेधादिति भावः ॥ अतो दीर्घो ॥ तुरुस्तु शश्यः इति सूत्रात्सार्वधातुकइत्यनुवर्तते ॥ सार्वधातुके किं । केशवः । अगमा । अतआइति वक्तव्येदीर्घ ग्रहणाद्दीर्घ एव यथा स्यादित्येतदर्थं अन्यथा ऽपाचौरोदनं देवदत्त। ननु पचामि भोरित्यत्रानन्त्यस्यापि प्रश्नाख्यानयोरिति प्लुतः स्यात् ॥ केचित्तु अत आदिति सुवचं तपरकरणसामर्थ्याद्विकारनिवृत्तिर्भवेदिति प्लुतस्याप्रसङ्गात् ॥ उदात्तस्थानेउदात्तआकारः अनुदात्तस्थाने अनुदात्त आकार इत्यादि स्थानेन्तरतम इत्यनेनैव सिद्धम् । अत एव वृषाकप्यग्नीति सूत्रे वृषाकपिशब्दो मध्योदात्त एक एवोदात्तत्वं प्रयोजयत्यग्न्यादिषु तु स्थानेन्तरतम इत्येव सिद्धमिति मनोरमादावुक्तम् । ततश्च प्रयोजनाभावात्तपरकरणमनर्थ विध्यर्थमिति नाशङ्कनीयमेव । यदि तु इ लुप्यावृभ्य इत्यत्र आ आवितिवत् अत आ इत्यत्रापि आ आ इति प्रश्लेषः क्रियते तदा तपरकरणं विनापीष्टसिद्धिरित्याहुः । प्रहासे चेति सूत्रस्योदाहरणमाह । एहि मन्ये इति । ओदनं भोक्ष्येइ इति त्वं मन्यसे इत्यर्थः । एतम् एतवेति । एतं मन्ये ओदनं भोक्ष्येथे एत मन्ये ओदनं भोक्ष्यध्वे इत्यन्वयः । भोक्ष्यावहे इति । युवां मन्येथे भोक्ष्यामहइति यूयं मन्यध्वे इति क्रमेणार्थः ॥ परोक्षे लिट् ॥ यद्यप्यधिश्रयणादिव्यापाररूपा क्रिया सर्वा परोक्षैवा। उक्तंहि भाष्ये। क्रियानाम्-

यमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूतानिदर्शयितुमिति तथापि तदनुकूलशक्तिमतां व्यापाराविष्टानां साधनानां पारोक्ष्यमिह विवक्षितं तेन क्रियानाविष्टसाधनमात्रप्रत्यक्षेपि लिट् भवत्येव। अयं पपाच त्वं पेचिथ। ननु क्रियाशब्दवाच्याधिश्रयणाधःश्रयणादिव्यापाराणांयुगपत्प्रत्यक्षाविषयत्वेपि क्रमशः प्रत्यक्षविषयत्वमस्ति यत्र तु क्रमशोपि प्रत्यक्षविषयत्वं नास्ति तत्र हि पारोक्ष्यं क्रियायाः। ततश्च लिडुत्तमपुरुषो दुर्लभ इति चेदत्राहुः। स्वव्यापारस्यापि वर्त्तमानतादशायां व्यासङ्गादिना स्वयमप्रतिसंधाने ततः कार्येणानुमितौ भवत्येव। बहु जगद पुरस्तात्तस्य मत्ता किलाहमितिवदिति ॥ लिट् च ॥ आर्द्धधातुकसंज्ञ एवेति। लङः शाकटायनस्येति सूत्रादेवकारोनुवर्त्तत इति भावः ॥ परस्मैपदानाम् ॥ अत्र थशब्दस्य अकारो विधीयमानः अन्त्यस्य प्राप्नोति न चाकारस्याकारविधौ निरर्थकत्वमिति वाच्यम्। यथासंख्यसंपादनेन कृतार्थत्वात्। अत्राहुः। धातोरित्यधिकारादादेः परस्येति व्यञ्जनमात्रस्य कृते द्वयोरतो गुण इति पररूपम्। यद्वा द्वयोरकारयोः पररूपेण सूत्रे निर्देशस्तथा चानेकाल्त्वात् सर्वादेशे सिद्धमिष्टमिति। ननु सुबन्तानामेवद्वन्द्वस्तत्र त्वकारद्वयकल्पनायां सवर्णदीर्घ एव स्यादिति चेन्मैवम्। आदेशानां स्थान्यर्थेनैवार्थवत्त्वात् थशब्दस्य विधीयमानमकारद्वयं प्रत्येकमर्थवन्न भवतीति समुदितस्य प्रातिपदिकत्वेनातो गुण इति पररूपस्यैवप्रवृत्तेः॥ भुवो वुक् ॥ अचि श्नुधात्विति सूत्रादचीत्यनुवर्तते तदाह। लुङ्लिटोरचीति। अचीति किम्। अभूत् इत्यत्र वुकि सति लोपो व्योरिति लोपं बाधित्वा परत्वाद्धल्ङ्यादिलोपः स्यात्। ननु हल्ङ्यादिलोपादन्तरङ्गत्वाल्लोपो व्योरिति लोप एव भविष्यति तथा च मव्यतेर्यङ्लुङन्ताल्लङि तिप्सिपोरमामद् अमामः इत्यत्र लोपोव्योरिव माधवादिभिः स्वीकृतः। एवं चाज्ग्रहणं मादुपधायाइत्युत्तरार्थमनुवर्त्तमानमिहाप्यनुपरञ्जकतया वृत्तिकारादिभिर्योजितं न त्वावश्यकतयेत्येव निष्कर्ष उचित इति चेद् अत्राहुः। भुवो वुगित्यस्याङ्गत्वाद्धल्ङ्यपेक्षत्वेन हल्ङ्यादिलोपस्यैव वुकोपि बहिरङ्गतया असिद्धत्वेसति वलिलोपस्य प्राप्तेरेवाभावादज्ग्रहणमिष्टार्थमपीत्येवयुक्तमिति। अयं च शंकाग्रन्थः समाधानग्रन्थश्च मनोरमायां स्थितः। अत्रनव्याः। मव्यतेर्यङ्लुगन्त एव नास्ति अमामदित्यादि रूपं तु दूरादपास्तमेव यकारवकारान्तानामूठ्भाविनां यङ्लुङ् नास्तीति च्छ्वोः शूडिति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टीकृतम्। इदं च च्छ्वोरिति यत्रोठ् तद्विषयकं ज्वरत्वरेत्यूठ्भाविनोः स्त्रिविमव्योस्तु यङ् लुगस्त्येवेतिन्याय्यं माधवादिसंमतं च। मव्यबन्धने अयं यान्तऊठ्भावीति सूत्रेवप्रमाणत्वात्। तथाच तद्ग्रन्थेन सहास्वत्यमनोरमाग्रन्थो विरुध्यत इत्याहुः।

यदि तु भवतेर्यङ्लुगन्तादितिमनोरमायां पठ्यते तदा तत्र पूर्वापरग्रन्थविरोधो नास्तीति दिक् । अजादेरिति । यदि बहुव्रीहिः षष्ठी तदा इन्द्रमात्मन इच्छति इन्द्रीयति इन्द्रीयितुमिच्छति इन्दिद्रीयिषतीत्यत्र दकारस्य नन्द्रा इति द्वित्वनिषेधः स्यात् किं तु अचावसावादिश्चाजादिस्तस्मादिति कर्मधारयादेषा पञ्चमी तदाह । आदिभूतादचः परस्य त्विति । भूव्भूव् इति । यद्यप्यत्र धात्ववयवत्वं प्राथम्यं च न संगच्छते तथापि व्यपदेशिवद्भावेन तद्बोध्यम् । नन्विह चत्वार एकाचः तत्रावयवास्त्रयः तत्र भ् ऊ व् इति ।भूविति समुदायश्चतुर्थः । तथा चानियमेन यस्य कस्य चिद्द्वित्वं स्यान्मैवम् । समुदायस्यैकाच एव द्विर्वचनस्य न्याय्यत्वात् तस्मिन् हि द्विरुच्यमाने अवयवा अपि द्विरुच्यन्त एव हस्तचलनेन सर्वावयवचलनवत् ॥ पूर्वेति । एकाचो द्वे इति प्रकरणे ॥ हलादिः ॥ अभ्यासस्येति जातिपरो निर्देशस्तेन आततुः आटतुरित्यादौ तकारादिनिवृत्तिः सिध्यति क्व चिदभ्यासे आदेर्हलः सत्वमाश्रित्य सर्वत्रानादेर्लोपविधानात् ॥ भवतेरः ॥ अत्र लोपोऽभ्यासस्येति सूत्रादभ्यासपदमनुवर्तते । अत्र प्राचोक्तम् । भवतेरिति कर्तृनिर्देशाद् भावकर्मणोर्नात्वमिति केचित् । व्याख्यातं च तत्पौत्रेण कर्त्रर्थयोः श्तिप्शपोर्निर्देशादित्यर्थः इति तन्न । धातुनिर्देशमात्रे श्तिपो विधानात् शपश्च विकरणत्वेनानर्थकत्वात् कर्त्रर्थके परे विहितस्यापि तस्य श्तिपः शित्त्वसामर्थ्यादिवेह प्रवृत्तेः । अन्यथा त्वदुक्तरीत्या उपसर्गात्सुनोतिसुवतीत्यादीनामपि भावकर्मणोरप्रवृत्तौ सर्वोपप्लव एव स्यात् । अपसिद्धान्तश्चायमिति स्पष्टमेवाकरदृश्याम् । प्रयुञ्जते च कर्मण्यपि अकार कवयः तस्यातपश्च विभरांबभूवे विभावरीभिर्विभरांबभूविरे इत्यादि ॥ एतत् प्रक्रियाप्रसादग्रन्थदूषणं मनोरमायां स्थितम् ॥ अत्र नव्यैः श्तिपः शित्त्वसामर्थ्यादिवेह शपः प्रवृत्तिरिति यदुक्तम् । तन्न । पिबतिः ध्मायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या आत्त्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात् । एवं च उपसर्गात् सुनोतिसुवति भवतेरः ध्ययतेः संप्रसारणं चेत्यादिनिर्देशात् अकर्तृवाचिन्यपि परे शबादय इत्येव व्याख्येयम् । अन्यथा इक्श्तिपौ धातुनिर्देश इति सूत्रे वक्ष्यमाणग्रन्थेन सह विरोधापत्तेः ॥ केचित्तु शित्त्वात्तिपः सार्वधातुकत्वेन भवतिरित्यादौ आर्धधातुकस्येड् वलादेरितीडागमनिवृत्त्या, ब्रवीतिरित्यत्र ब्रुव ईडिति ईडागमप्रवृत्त्या च, शित्वं चरितार्थमिति व्याचख्युः ॥ तच्चिन्त्यम् । तितुत्रेत्यनेनेण्निषेधादार्धधातुकत्वेपि क्षत्यभावात् । ब्रुव ईडित्यत्र ब्रुवः परस्य हलादेः पित ईडागम इत्येतन्मात्रस्य मूले व्याख्यातत्वात् सार्वधातुकस्येति विशेषणाभावेपि क्षत्यभावात् । न च हलादेः पित्प्रत्ययस्य सार्वधातुक-

स्येति विशेषणाभावे ब्रुवो लिटि वचादेशे सिपः थलि उवक्थेत्यत्रातिप्रसङ्गः स्यादिति वाच्यम् । थलोऽत्र पित्त्वाभावात् । न च स्थानिवद्भावेन पित्त्वम् शः शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येष्वनल्विधाविति तन्निषेधात् ॥ तस्मात् पूर्वोक्तरीत्यैव श्तिपः शित्त्वसामर्थ्यादकर्त्तर्यपि शपः प्रवृत्तिरिति ग्रन्थो निराकर्त्तव्य इत्याहुः ॥ तदपरे न क्षमन्ते । थलः पित्त्वाभावे हि असंयोगाल्लिट् किदिति कित्त्वात् वचिस्वपीति सम्प्रसारणे सति उवचिथ उवक्थेति न सिद्ध्येत् किंतु ऊचिथ ऊक्थेति स्यात् । तस्मात् स्थानिवत्त्वेन थलः कित्त्वेऽभ्युपगते उवक्थेत्यादावतिप्रसङ्गवारणाय पितः सार्वधातुकस्य ईडागम इति व्याख्यातव्यमेव । तथा च ब्रवीतिरित्यत्र ईडागमप्रवृत्त्या शित्त्वं चरितार्थमिति केचिदुक्तं तदपि सम्यगेवेति ॥ असिद्धवदत्राभात् ॥ वत्करणं प्रतिपत्तिलाघवाय । अन्यथा सिद्धे असिद्ध इति प्रयुज्यमानमनुपपन्नं सत् सामर्थ्यादसिद्धवदिति कल्पनीयं स्यात् । यथा राजभिन्ने पुरोहिते राजायमिति प्रयोगो राजवदिति कथंचित् कल्पयति । राजवदयं पुरोहित इत्युक्ते तु लघुप्रतिपत्तिर्भवति ॥ तथा चागत्या षत्वतुकोरसिद्ध इत्यत्रासिद्धवदिति कल्प्यते । असंयोगाल्लिट् किदित्यत्रापि किद्वदित्यगत्यैव कल्प्यत इति ज्ञेयम् ॥ आभादित्यभिविधावाङ् ॥ भाधिकारमभिव्याप्येत्यर्थः ॥ अधिकारश्चायम् ॥ अत्रग्रहणं समानाश्रयप्रतिपत्त्यर्थम् । आभाद्ग्रहण विषयनिर्देशार्थम् । भाधिकारस्यावधिलाभस्तु अङ्गस्य प्रत्ययः परश्चेत्यादाविव व्याख्यानेनैव सिद्ध्यति । एवं च अनुदात्तोपदेशेत्यत्रास्योपस्थाने सत्ययमर्थो भवति एषामनुनासिकस्य लोपः स्यात् झलादौ क्ङिति परे स चासिद्धो भवति । अत्र झलादिकिदाश्रित्यैव यदाभीयं प्राप्नोति तस्मिन् कर्तव्ये इति जङ्गहि जङ्घहि अतो हेरिति लुग् न भवति । अनुनासिकलोपस्य हिशब्दाश्रितत्वेनासिद्धत्वात् ॥ नन्वस्याधिकारत्वे यत्र यत्रोपस्थानं तत एवारभ्य यदाभीयम् तस्मिन्नेव कर्तव्ये असिद्धत्वं स्यात् न तु ततः पूर्वस्मिन्नपि । ततश्च घ्वसोरित्येत्वं पूर्वस्मिन्नपि धित्वे कर्त्तव्ये नासिद्धं स्यादिति चेद् ॥ भवेदयं दोषः शब्दाधिकारे । अर्थाधिकारश्चायम् । ततश्चेह आन्नलोप इत्यवधिर्निर्णीतः । स एव प्रतिसूत्रमुपतिष्ठते । तदेतत् सकलमभिप्रेत्याह इत ऊर्ध्वमिति । अत्रापि शास्त्रासिद्धत्वमेव आकरे स्थितम् । एतेन एधि शाधीत्यत्र स्थानिनो झलन्तत्वबुद्धेरनिवर्तितत्वात्तन्निबन्धनं हुझल्भ्यो हेर्धिरिति धित्वं सिध्यति । प्राचोक्तकार्यासिद्धत्वपक्षे तु न सिद्ध्यति । देवदत्तस्य हन्तरि हते देवदत्तस्य जीवनं नेति न्यायेन एत्वविधिना झल्बुद्धौ निवर्तितायां पश्चादेत्वबुद्धिनिवर्तनेऽपि धित्वकार्यस्याप्रवृत्तेरित्याहुः ॥ समानाश्रये इति किम् ।

पपुषः, चिच्युषः, लुलुवुषः, । इह पाधातोः, चिञो, लूञश्च, परस्य वसोर्यत्संप्रसारणं तत् आतो लोप इटि चेत्यालोपे, एरनेकाच इति यण्वुवङि च कर्तव्ये नासिद्धम् । आलोपादीनि हि क्वसौ संप्रसारणं तु विभक्ताविति व्याश्रयत्वात् । न च बहिरङ्गत्वेनासिद्धतास्त्विति शङ्क्यम् । नाजानन्तर्येति निषेधात् । वाह ऊठ् सूत्रस्थबहिरङ्गपरिभाषाया अप्याभीयत्वेन आलोपादिषु कर्तव्येष्वसिद्धत्वाच्च । न चोक्तपरिभाषाया आलोपादीनां च समानाश्रयत्व नेति शङ्क्यम् । वसोः संप्रसारणे कृते ह्यजाद्याश्रयेणालोपादीनि प्रवर्तन्ते, तेषु कर्त्तव्येषु सम्प्रसारणस्यासिद्धत्वाय तद्विषये बहिरङ्गपरिभाषापि प्रवर्तत इति तेषां तत्त्वार्थादिति दिक् ॥ विषयलाभार्थम् आभाद्‌ग्रहण किम् । आभीय प्रत्येवाभीयमसिद्ध नान्यं प्रतीति यथा स्यादित्येवमर्थम् । तेन अभाजि राग इत्यत्र भञ्जेश्च चिणि रञ्जेश्च घञि च भावकरणयोरिति नलोपे कृते तस्यासिद्धत्वाभावात् अत उपधाया इति वृद्धिर्भवतीत्याहुः ॥ स्यादेतत् । देभतुः देभुरित्यत्र अन्थिग्रन्थिदम्भीति वक्ष्यमाणवचनेन लिटः कित्त्वान्नलोपेप्येत्वाभ्यासलोपौ न स्यातां तस्यासिद्धत्वात् ॥ अत्राहुः ॥ श्नसोरल्लोप इति तपरकरणाल्लिगात् आभीयासिद्धत्वमनित्यमिति नास्त्यत्र दोषः । तपरकरणं हि आस्तामित्यत्र आडागमस्य लोपो मा भूदित्येतदर्थम् । यद्याडागमः श्नसोरल्लोपं प्रत्याभीयत्वेनासिद्धः स्यात्तर्हि किं तेन तपरकरणेन । एव च दम्भेश्चेति वक्ष्यमाणं नापूर्ववार्तिकम्, किं त्वनित्यत्वबललभ्यमेवेति ॥ वुकः वुक्शास्त्रस्य । एवमग्रेपि । युट उदाहरण तु दिदीये ॥ बभूवेति । अत्र प्राचा इन्धिभवतिभ्यां चेति सूत्रं पितोपि लिटः कित्वार्थमिति व्याख्यायाचो ञ्णितीति वृद्धिप्राप्तौ क्ङिति चेति निषेध इत्युक्तम् । तदुपेक्षितम् । इग्लक्षणयोरेव गुणवृद्ध्योर्निषेधइति सिद्धान्तात् । अन्यथा इक्स्थानिकयोर्निषेधे लैगवायन इत्यत्रापि वृद्धिर्न स्यात् । न चात्र कित्त्वसामर्थ्यादनिग्लक्षणाया अपि वृद्धेर्निषेध इति वाच्यम् । थलि उत्तमे णलि च गुणनिषेधेन कित्त्वस्य चरितार्थत्वात् । सूत्रं तु प्रत्याख्यातमेवाकरे । तथाच वार्तिकम् । इन्धेश्छन्दोविषयत्वाद् भुवो वुको नित्यत्वात्ताभ्यां लिटः किद्वचनानर्थक्यमिति ॥ यद्यपीह शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्ति । तथापि कृताकृतप्रसंगित्वमात्रेणापि क्वचिन्नित्यता स्वीक्रियत इति पक्षोप्यस्मादेव वार्तिकादवगम्यते । तेन रन्धेर्णिचि परामपि उपधावृद्धिं बाधित्वा नित्यत्वाद् रधिजभोरचीति नुमि कृते रन्धयतीति सिद्धम् ॥ नन्वेवमपि संयोगात् परस्य लिटः कित्त्वार्थमिन्धेर्ग्रहणं त्वयोपेक्षित एव । अन्यथा समीधे दस्युहन्तममित्यत्र इन्धेर्नलोपो न स्यात् ॥ मैवम् । छन्दस्युभयथेति सूत्रेण हि सार्वधातुकसंज्ञार्धधातुकसंज्ञा च

विधीयते । तेन सार्वधातुकमपिदिति लिटो ङित्त्वे स्यादेव नलोप इति वार्त्तिकाश्रयात् ॥ अत्र नव्याः बभूवेत्यत्र द्विर्वचनेचीत्यजादेशस्य निषेधाद् गुणवृद्धिभ्यां, प्रागेव वुकः प्रवृत्त्या भुवो वुको नित्यत्वादिति वार्त्तिके नित्यत्वादिति हेतूपन्यासो निष्प्रयोजनः । शब्दान्तरप्राप्त्या वुको नित्यत्वं नास्तीत्याशङ्का कृताकृतप्रसंगित्वमात्रेणापि क्वाचन्नित्यत्वं स्वीक्रियते इत्यादिसमाधानमपि व्यर्थमेवेत्याश्रित्य स्वयमेव समादधुः । षाष्ठद्वित्वप्रकरणान्ते हि वार्त्तिककृता पूर्वविप्रतिषेधः पठ्यते । द्विवचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य इति । तथाच द्विर्वचनेचीति सूत्रं नारम्भणीयमित्याशयेन नित्यत्वादिति हेतूपन्यस्त इति ॥ द्विर्वचनेचीति सूत्रेण अजादेशस्य स्थानिवद्भावो विधीयत इति पक्षे तु द्वित्वात् प्रागेव वृद्ध्याद्यादेशस्य स्वीकृतत्वादादेशानन्तरमपि वुकः प्रवृत्तिरस्तीति भुवो वुको नित्यत्वात् इत्यादिग्रन्थः सम्यगेव ॥ न चैवमपि नामधातुषु त्वापयति मापयतीत्यत्र मपर्यन्तस्य त्वमौ परत्वात् पूर्वं नित्यत्वाट्टिलोपइति ग्रन्थः कथं सगच्छेतेति वाच्यम् । प्रकृत्यैकाजिति सूत्रभाष्ये प्रत्याख्यातमित्याशयेन तत्प्रवृत्तेः ॥ अत एव त्वादयति मादयतीत्येव न्याय्यमिति तत्रोक्तमिति दिक् ॥ आर्धधातुकस्येड्वलादेः ॥ नेड्वशि कृतीत्यत इडित्यनुवर्तमाने पुनरिड्ग्रहणं निषेधसंबद्धस्येटो निवृत्त्यर्थम् । वस्तुतस्तु समर्थानां प्रथमाद्वेत्यनुवृत्तस्य पदत्रयस्य मध्ये प्राग्दिश इत्यनन्तरं समर्थानां प्रथमादिति निवृत्तम् वेति त्वनुवर्तत इति व्याख्यानमिव नेति निवृत्तम्, इडित्यनुवर्तत इति व्याख्यातुं शक्यत्वादिड्ग्रहणं त्यक्तुं शक्यम् ॥ तथापि स्पष्टप्रतिपत्त्यर्थं तत् स्वीकृतमिति बोध्यम् ॥ आर्धधातुकस्येति किम् । आस्ते शेते ॥ वलादेः किम् । एधनीयम् ॥ ननु रुदादिभ्यः सार्वधातुक इत्यनेन सार्वधातुकस्य यदि इड् भवति, तर्हि रुदादिभ्य एवेति नियमादास्ते शेते इत्यत्र न भवेदिति आर्धधातुकस्येति व्यर्थम् । न च रुदादिभ्यः सार्वधातुक एवेति विपरीतनियमाद्रोदितेत्यत्र न स्यात्, आस्ते शेते इत्यत्र तु स्यादिति शंक्यम् । रुदविदमुषग्रहिस्वपिप्रच्छः सश्चेति क्त्वासनोः कित्त्वस्य वैयर्थ्यप्रसंगात् ॥ त्वदुक्तरीत्या क्त्वासनोरिडागमाभावेन न क्त्वा सेट् इति निषेधाप्रवृत्त्या क्त्वाप्रत्यये औपदेशिककित्त्वस्य सुस्थत्वात् । हलन्ताच्चेति झलादिसनः कित्त्वाच्च । तस्माद्विपरीतनियमासंभवेन आर्धधातुकग्रहणं व्यर्थमेव ॥ ननु तद्ग्रहणाभावे वलादेरित्यस्य अंगस्येति यदधिकृतम्, तद्विशेषणं स्यात् । ततश्च अडाटाविव इडागमोपि अंगस्य स्यात् ॥ मैवम् । कृतेप्यार्धधातुकग्रहणे वलाद्यार्धधातुकस्य यदंगं तस्येडागम इति व्याख्यानापत्त्या उक्तदोषतादवस्थ्यात्

टवस्थ्यात् । अकृतेपि तद्ग्रहणे अंगस्य यो वलादिरंगनिमित्तं तस्येट् इति व्याख्यानादिष्टसिद्धेश्च तस्मादुभयथापि व्याख्याने शरणीकर्तव्ये आर्द्धधातुकस्येत्यस्य त्याग एव श्रेयान् ॥ नन्वेवं केशवः अंगना वृक्षत्वमित्यत्रेट् स्यात् अत इधातोरित्यतः धातोरित्यनुवर्तनादधातोः परस्य न भवति इति परिहारसंभवेपि लूभ्यां पूभ्यामित्यत्र दुर्वार एवेडागमः विहितविशेषणेनाप्ययं वारयितुमशक्यः क्विबन्ताद धातुत्व न जहतीति लूभ्यां लूभिरित्यत्र भ्यामादेर्धातोर्विहितत्वानपायात् । किंच जुगुप्सत इत्यादौ गुप्तिज्किद्भ्यः इति धातोर्विहितस्य सनः इट् दुर्वारः स्यात् । न चेह धातोः परत्र विहितस्य वलादेरिति व्याख्यानलाभाय धातोरिति पञ्चम्यन्तमपेक्षितम् । तच्च दुर्लभम् । अत इधातोरिति षष्ठ्यन्तत्वात् । तथा च वृक्षत्वमित्यादावपि इडागमप्रसंग इति वाच्यम् । शब्दाधिकारपक्षे स्वरितत्वेन तत्सदृशशब्दोनुमीयत इति पञ्चम्यन्तलाभात् । अस्तु वा षष्ठ्यन्तत्वम्, विहितत्वं षष्ठ्यर्थ इति व्याख्यायामिष्टसिद्धेः ॥ तस्माज्जुगुप्सत इत्याद्यवतिप्रसंगवारणार्थमार्धधातुकस्येति ग्रहणम् ॥ केचित्तु धातोरिति आवर्त्य धातोरित्युच्चार्य विहितो यः प्रत्ययः तस्य इट् इति यदि व्याख्यायेत, तदा लूभ्यां जुगुप्सत इत्यत्रातिप्रसंगाभावादार्धधातुकस्येति व्यर्थमित्याहुः ॥ बभूविवेति । न चात्र श्र्युकः किती-ति इण्निषेधे वुगागमोपि न स्यादिति शंक्यम् । क्रादिनियमादिटः प्रवृत्तेः ॥ अनद्यतने ॥ अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन सहितो दिवसोद्यतन इति कालोपसर्जने च तुल्यमित्यत्र स्थितम् ॥ आर्धधातुकम् ॥ धात्वधिकारोक्त इति । धातोरेकाच इत्यतः धातोरित्यनुवर्तमाने पुनर्धातोरित्यधिकारसूत्रारम्भादिदं लभ्यते । एतच्च तत्रैव मनोरमायां स्पष्टम् ॥ धातोरिति विहित इति किम् । लूभ्यां जुगुप्सते ॥ अनेकव्यवहितस्येति । सार्वधातुकादिकमिको विशेषणं, न त्वङ्गस्येति भावः ॥ तासस्त्योः ॥ सः स्यादार्धधातुक इत्यतः सीत्यनुवर्तते । अङ्गाक्षिप्तप्रत्ययस्य सीत्यनेन विशेषणात् यस्मिन् विधिरिति तदादिविधिस्तदिदमाह । सादाविति । एवं रादावित्यत्राप्यूह्यम् ॥ प्राग्वदिति । तासेर्लोप इत्यर्थः । अस्तिस्तु नेह संबध्यते, ततो रादिप्रत्ययस्यासंभवात् ॥ लृट् शेषे च ॥ तुमुन्ण्वुलौ क्रियाया क्रियार्थायामिति प्रागुक्तम् ततोन्यः शेष इत्याह । असत्यामिति ॥ हरदत्तस्त्वाह अस्वरितत्वादेव क्रियार्थायां क्रियायामिति नानुवर्तते । एवं च शेषे चेति सुत्यजमिति ॥ तच्चिंत्यम् । शयिष्यत इति स्थीयत इत्यादौ तुमुना लृटो बाधापत्तेः । लृलुट्तुमुन्खलर्थेषु वासरूपविधिरभावात् । अत्र च ज्ञापकं प्रैषातिसर्गप्राप्तकालेषु

कृत्यश्चेत्यत्र लोटा बाधा मा भूदिति पुनः कृत्यविधिरित्यादि कृदन्ते वक्ष्यति ॥ इदमपि ज्ञापकमित्यन्यदेतत् ॥ यत्तु प्राचा भविष्यतीति व्रजतीत्युदाहृतम् ॥ तदापाततः । तुमुन्विषयेपि लृट् भवति तुमुना लृण्न बाध्यते इत्येतत्प्रतिपादनाय तस्यानुपयोगात् । न हि भविष्यतीत्यत्र कर्तरि तुमुनः प्राप्तिरस्ति । भावे हि सः समानकर्तृकेषु एवेति च वक्ष्यते । लृडित्येतावत्सूत्रकरणेपि भविष्यतीति व्रजतीत्ययं सिध्यत्येवेत्यास्तां तावत् ॥ लोट् च ॥ विधिनिमन्त्रणेत्याद्यनुवर्तते तदाह । विध्यादिष्विति ॥ आशिषि लिङ्लोटौ ॥ ननु विध्यादिसूत्र एव संप्रश्नप्रार्थनाशीःष्वित्युच्यतां किमनेन पृथक्सूत्रकरणेनेति चेत् ॥ अत्राहुः । इह हि क्तिच्क्तौ चेत्युत्तरसूत्रार्थमाशिषीति तावदावश्यकम् । लिङ्लोटावपि इहैव विधेयौ विध्यादिसूत्रे आशीर्ग्रहणे हि स्मे लोडित्यादिना स्वविषये परत्वाद्बाधः स्यात् । सिद्धान्ते परत्वादेष विधिः स्मे लोडित्यादेर्बाधक इति महान् विशेष इति ॥ तुह्योस्तातङ् ॥ यद्यपि तिह्योस्तातङ् इति वक्तुं शक्यम् तथापि लाघवाभावादतिप्रसङ्गवारणाय हिशब्दसाहचर्याश्रयणे लोट इत्यनुवर्तने वा गौरवाच्च तुह्योरित्युक्तम् ॥ लोटो लङ्वत् ॥ लोटः इत्युपमेये षष्ठीदर्शनादुपमानादपि षष्ठ्यन्तादेव वतिस्तदाह । तेनेति ॥ अडाटौ तु नातिदिश्येते, न हि तौ लङः क्रियेते, किं त्वङ्गस्येति भावः ॥ नन्वेवमपि यान्तु वान्तु इत्यत्र लङः शाकटायनस्यैवेति जुस् स्यात्, जुह्वतु विन्दन्त्वित्यत्र तु सिजभ्यस्तेति जुस्स्यात् ॥ अत्राहुः विदो लटो वेति वाग्रहणमिहानुवर्त्य व्यवस्थितविभाषाश्रयणान्न जुस् ॥ यद्वा लङः शाकटायनस्यैवेति सूत्रे नित्यं ङित इत्यनुवृत्त्यैवेष्टसिद्धेः लङ्ग्रहणमतिरिच्यते, लुङि सिचा लृङि स्यप्रत्ययेन च व्यवधानात् । लिङि तु झेर्जुस् इति जुसो विहितत्वाच्च । ङित इत्यस्य लङ्येव पर्यवसानात् । ततो लङ्ग्रहणं विभज्यते नियमार्थं लङेव यो लङ् तस्यैव झेर्जुस्, न तु लङ्वद्भावेन यो लङ् तस्येत्यतो नोक्तदोष इति ॥ तच्चिन्त्यम् । अदुरित्यत्र सिजभ्यस्तेति नित्यजुस बाधित्वा परत्वात् शाकटायनस्यैवेति विकल्पप्रसङ्गात् । तस्माल्लङ्ग्रहणं शाकटायनसूत्रे कर्त्तव्यमेव । न तु तदतिरिच्यते । न च आतः इति सूत्रेण अदुरित्यत्र नित्यं जुस्स्यादिति वाच्यम् । तस्य नियमार्थत्वेन विध्यर्थत्वायोगात् । अन्यथा अभूवन्नित्यत्र सिजभ्यस्तेति जुस् दुर्वार एव स्यादिति नव्याः ॥ यदि त्विह आत इति सूत्रमावर्त्य विध्यर्थतां नियमार्थतां च व्याख्यायेत । तदा तु उक्तदोषाभावाद् यद्वेति समाधानमपि सम्यगेव । शाकटायनस्येति जुसो वैकल्पिकत्वात् । तदभावपक्षे पुनः प्रसङ्गविज्ञानात् सिजभ्यस्तेति

जुसि स्वीकृते तु सुतरां सम्यगेव । परं तु जुह्वतु विन्दन्त्वित्यत्र जुसभावाय व्यवस्थितविभाषा तु आश्रयणीयैवेति दिक् ॥ सकारान्तस्येति । ङिल्लकारोत्तमसकारस्येति प्राचो व्याख्यानं त्वयुक्तम् । भूयासमित्यादावतिप्रसङ्गः स्यादिति भावः ॥ ङिदुत्तमस्येति । ङिल्लकारोत्तमस्येत्यर्थः । तेन भवावः भवाम इत्यादौ नातिप्रसङ्गः ॥ सोपिच्चेति । एवं च पित्त्वेनानुदात्तस्य सिपः स्थाने यो हिरादेशः, स तु स्थानिन्तरतम इत्यनुदात्तो न भवति ॥ जहि शत्रून् । स्तुहि स्तुतम् ॥ भवतादिति । लुगपेक्षया परत्वाद्धेस्तातङ् । अन्तरङ्गमेव लुक् बाधते, न तु परमिति भावः ॥ स पिच्चेति । स इति तच्छब्देन यस्याऽडागमः स परामृश्यत इत्याहुः ॥ इतश्च ॥ इतश्च लोप इति सूत्रात्परस्मैपदेष्वित्यनुवृत्तं षष्ठ्येकवचनान्ततया विपरिणमय्य इतेरित्यनेन विशेष्यते, तदाह । परस्मैपदमिकारान्तं यत्तस्येति । प्राचा तु परस्मैपदेष्विकारस्य लोप इत्युक्तम् । तदयुक्तम् । भवेदित्यादावतिव्याप्तेः ॥ ननु अतो येय इत्यत्र इय् दीर्घादिरस्तु । एवं च नोक्तातिव्याप्तिः । इतश्चेति तपरकरणात् । अत एव अबोभवीदित्यादावपि न दोष इति चेत् ॥ नैवम् । रुदेर्लङि अरुदितामित्यादौ दोषध्रौव्यादिति मनोरमायां स्थितम् । विधिनिमन्त्रणा ॥ ष्योत्येषु वाच्येषु वेति । पक्षद्वयस्यापि आकरे स्थितत्वादिति भावः ॥ अत्र आद्ये त्वित्थमुपपत्तिः विध्यादीनां प्रत्ययार्थत्वमनुचितम् । तथाहि सति कर्त्रादीनामर्थानां लकारान्तरे चरितार्थानां विध्यादयोर्था बाधकाः स्युः । तथा च लिङः कर्त्राद्यभिधायकत्वं न स्यात्, ततश्च द्विवचनबहुवचने न स्यात्, शबादयश्च न स्युः, पुरुषव्यवस्था च न स्यात्, अभिहितत्वप्रयुक्तस्तृतीयादिविरहश्च न सिध्येदिति ॥ द्वितीये त्वित्थमुपपत्तिः विध्यादिभिः कर्त्रादयो न बाध्यन्ते, परस्परविरोधाभावात् । तथा च लः कर्मणीत्यत्र ल इति बहुवचननिर्देशेन सर्वलकाराणां संग्रहात् लिङादीनामपि कर्त्रादयोर्था भवेयुः ॥ किं च कर्त्रादयोपि निरवकाशाः ॥ न च लङादयोवकाशाः । न्यायसाम्येन विध्यादिवद्वर्त्तमानत्वभूतत्वादेरपि तत्तल्लकारवाच्यत्वात् ॥ नचैवम् पचतीत्यादौ धात्वर्थं प्रति वर्तमानत्वादेः प्रत्ययार्थतया विशेष्यत्वं स्यात् तथा चैककर्तृका वर्तमाना पचिक्रियेत्यादिशाब्दबोधवर्णनमयुक्तं स्यादिति वाच्यम् । प्रत्ययार्थतया विशेष्यत्वापादानस्य कर्त्रादावपि तुल्यत्वात् ॥ ननु प्रत्ययार्थः प्रधानम्, प्रकृत्यर्थो विशेषणमित्यौत्सर्गिकमाख्याते त्यज्यते । भावप्रधानमाख्यातमिति सिद्धान्तानुरोधादिति चेत् ॥ तर्हि तत एव नोक्तदोष इति दिक् ॥ प्रवर्त्तनायामिति ।

प्रवर्तनात्वस्य विध्यादिषु चतुर्षु, अनुस्यूतत्वादिति भावः ॥ अत्र वदन्ति । प्रवृत्तिः प्रवर्तना चोभयमपि व्यापारः स च धात्वर्थः । फलव्यापारयोर्धातुवाच्यत्वस्वीकारात्तदाश्रयस्तु लकारार्थो व्यापारत्वेन प्रवर्तनाया धात्वर्थत्वेपि प्रवर्तनात्वेन प्रवर्तना तु लिङ्त्वादिरूपेण लकारवाच्या द्योत्या चेति पक्षद्वयम् । प्रवृत्तिः पुरुषनिष्ठा आर्थी भावनेत्युच्यते । प्रवर्तना तु विधिः मां प्रेरयतीत्यनुभवाल्लिङादिनिष्ठा शाब्दी भावनेत्युच्यते वेद एव लिङादिनिष्ठा वक्तुरभावात् लोके तु पुरुषनिष्ठा इति केचिदभ्युपगच्छन्ति ॥ प्रवर्तनाया अस्याः पुरुषप्रवृत्तिरेव भाव्या, पुरुषप्रवृत्तेस्तु यजनदानादि भाव्यम् । एवं च धातूपात्तव्यापारस्य विषयविषयिभावेन द्वेधान्वये तात्पर्यग्राहका लिङादय इति द्योतकतापक्ष एव ज्यायान् ॥ लिङ्त्वादिरूपेण लकारस्य प्रवर्तनायां शक्त्यन्तरकल्पने गौरवात् ॥ एवं णिच्यपि । इयांस्तु विशेषः णिच्प्रत्ययद्योत्या प्रेरणा सर्वस्मिन्नपि मते पुरुषादिनिष्ठैव, न तु णिज्निष्ठा । लिङादिद्योत्या तु मतभेदेन लिङ्निष्ठा वा पुरुषनिष्ठा वेति ॥ स्यादेतत् लिङादिद्योत्या प्रवर्तना लोके पुरुषनिष्ठेति मते पाचयत्योदनं देवदत्तेन यज्ञदत्त इतिवत् पचेदोदनं देवदत्तेन यज्ञदत्त इति प्रयोगः स्यात् । प्रवृत्त्याश्रयः प्रवर्तनाश्रयस्य लकारेणोक्त इति कर्तरि तृतीया न भवति किं तु प्रथमैवेति चेत्, तर्हि ओदनं देवदत्तो यज्ञदत्तः पचेत् इति प्रयोगः स्यात् । अत्राहुः ॥ पुरुषनिष्ठेति मते प्रवर्त्तना लिङादिवाच्यैव न तु धातुवाच्या । तथाच लिङुपात्तव्यापाराश्रयस्य पुरुषस्य कर्तृत्वाभावान्नोक्तदोषः । देवदत्तेन पाचयति यज्ञदत्त इत्यादौ तु णिजन्तस्य धातुत्वाद्धातूपात्तव्यापाराश्रयत्वेन प्रयोज्यप्रयोजकयोरुभयोरपि कर्तृत्वाल्लकारेणाऽनुक्ते प्रयोज्ये कर्तरि तृतीयेति वैषम्यमिति ॥ कौस्तुभादौ तु हेतुमति चेति सूत्रे प्रयोजकव्यापारस्य णिज्वाच्यत्वपक्ष एव मुख्यत्वेन स्थापितः । व्यापारद्वयस्यापि णिच्प्रकृत्यर्थत्वे तु अभीत्यस्य णिजर्थविशेषकत्वे अभिसावयति, प्रकृत्यर्थविशेषकत्वे तु उपसर्गात् सुनोतीति षत्वमभिषावयतीति सिद्धान्तस्य स्वारस्यभङ्गापत्तेरिति ॥ तथा गतिबुद्धीति सूत्रे अणिकर्त्तेति विशेषणमव्यावर्त्तकं स्यात् । त्वन्मते प्रयोजकव्यापारस्यापि णिच्प्रकृत्यर्थत्वे प्रयोजकस्याप्यणौ कर्तृत्वादिति दिक् ॥ प्रार्थनं याच्ञा ॥ क्वचिदिति । ज्ञापनफलं तु वक्ष्यमाणेत्यादौ टिड्ढाणञिति सूत्रे एवोक्तम् ॥ दयादित्यादौ उतो वृद्धिर्लुकि हलीति न प्रवर्तते, भाष्ये पिच्च ङिन्न, ङिच्च पिन्नेति व्याख्यानाद्विशेषविहितेन ङित्त्वेन पित्त्वस्य बाधादित्यदादौ वक्ष्यमाणतया यासुटो ङित्वं न ज्ञापकमित्यपरितोषादाह । श्‌ शानचः शित्त्वमिति ॥

सुट् तिथोः ॥ तकारादिकार उच्चारणार्थः ॥ लिङःसलोपो ॥ रुदादिभ्य इति सूत्रात् सार्वधातुक इत्यनुवर्त्तते सेति लुप्तषष्ठीकम् अनन्त्यस्येत्यनेन विशेष्यते तदाह । सार्वधातुकलिङोनन्त्यस्येति ॥ सकारद्वयस्यापीति । अवयवावयवोपि समुदायं प्रत्यवयव इत्याश्रयणात्सुटोपि लिङ्भक्तत्वादिति भावः ॥ आशीर्लिङीति । भूयास्तामित्यादौ ॥ ननु सुटि कृते अनचि चेति द्वित्वस्यासिद्धत्वात्ततः प्रागेव स्कोरिति यासुटः सकारो लुप्यते झलि परे यः संयोगस्तदादित्वात् । तथा चैकसकारकं रूपं तुल्यम् सुडभावे यासुटः सकारस्य द्वित्वे कृते तु सुटि स्कोरिति सलोपात्सुट एव सकारस्य द्वित्वे च द्विसकारकमपि रूपं तुल्यमेवेति सुटो विधानं व्यर्थमित्यपरितोषादाह । स्फुटतरं त्विति । एधिषीष्टेत्यादाविति भावः ॥ मध्येपवादन्यायेनेति ॥ रुदादिभ्य इति सूत्रात् सार्वधातुक इत्यननुवृत्तावयं न्यायः प्रवर्तत इति भावः ॥ अन्तरङ्गत्वादिति । प्रत्ययमात्रापेक्षत्वाद् दतो येय इत्यस्य त्वाङ्गत्वात्प्रकृतिप्रत्ययोभयसापेक्षत्वेन बहिरङ्गत्वादिति भावः ॥ नन्वपदान्ताकारस्य जुसत्राश्रयणात्पररूपस्याप्युभयसापेक्षत्वमस्त्येवेति चेत्॥ मैवम् । अनेकाश्रयत्वेपि प्रत्ययमात्राश्रयतया प्रकृतेरनाश्रयणात् ॥ व्याख्येयमिति । एतच्च विप्रतिषेध सूत्रे भाष्ये स्पष्टम् ॥ आर्धधातुकसंज्ञ इति । लङः शाकटायनस्यैवेत्यत एवकारोनुवर्तनीयः । अन्यथा एकसंज्ञाधिकारबहिर्भूतत्वेन सार्वधातुकसंज्ञापि स्यात् । ततश्च पक्षे शबादिः स्यात् ॥ किदाशिषि ॥ ङित्त्वेनैव गुणवृद्धिप्रतिषेधे सिद्धे किद्वचनमिज्यादित्यादौ संप्रसारणार्थम्, जागर्यादित्यत्र गुणार्थं च, जागर्त्तेर्गुणो हि ङिति पर्युदस्यते । ङित्त्वं चेह विशेषविहितेन कित्त्वेन बाध्यते ॥ सलोप इति । झल्परसंयोगादित्वेन यासुटः सस्य लोपः, सुटस्तु पदान्तसंयोगादित्वेनेति भाव इति मनोरमायां स्थितम्, तदसंबद्धमिति मत्वा अत्र निष्कर्षमाहुः । भूयास्तां भूयास्तं भूयास्तेत्यत्र झल्परसंयोगादित्वेन यासुटः सस्य लोपः । भूयादित्यत्र सुट इव यासुटोपि सस्य लोपः पदान्तसंयोगादित्वेनैव । अन्यथा झल्परसंयोगादिलोपस्यासिद्धत्वात्संयोगान्तलोप एव स्यात् । भृष्ट इत्यादौ सावकाशस्य झल्परसंयोगादिलोपस्य संयोगान्तलोपाबाधकत्वादिति ॥ ङिन्निमित्ते इति । किति गिति ङिति परे इको गुणवृद्धी न स्त इति न व्याख्यातं, छिन्नं भिन्नमित्यत्र लघूपधगुणस्यानिषेधप्रसङ्गात् । न चारम्भसामर्थ्यं शङ्क्यम् । चितं स्तुतमित्यादावव्यवहिते किति चरितार्थत्वादिति भावः ॥ अन्ये तु क्ङितीति प्रत्ययग्रहणात् प्रत्ययेन संनिधापितस्याङ्गस्य क्ङिति पर इति व्याख्याने तु छिन्नं भिन्नमित्यादि सिध्यत्येव ॥ न

चैवं भवाम इत्यादावतिप्रसङ्ग इति वाच्यम् । अन्तरङ्गं गुणं प्रति बहिरङ्गस्य निषेधस्याप्रवृत्तेरित्याहुः ॥ क्ङितीति सूत्रे चर्त्वेन गकारोपि प्रश्लिष्यत इत्याशयेन गित्किन्ङिन्निमित्त इत्युक्तम् ॥ गिति किम् ग्लाजिस्थश्च ग्स्नुः जिष्णुः । किति त्वस्मिन्स्थास्नुरित्यत्र घुमास्थेतीत्वं प्रसज्येत । न च क्ङोगित्त्वे भूष्णुरित्यत्र इण्निषेधो न स्यात् ग्लाजिस्थश्चेति चकाराद्भुवश्च ग्स्नुर्भवतीति श्रीकारादिति वाच्यम्, श्रुग्रकः कितीत्यत्रापि चर्त्वेन गकारं प्रश्लिष्य गित्कितोरिण्न स्यादिति व्याख्यानात् । न चैवं चर्त्वस्यासिद्धतया श्रुग्रक इत्यत्र विसर्जनीयो न लभ्यत इति ह्रस्वि चेत्युत्वमेव स्यादिति वाच्यम् । सौत्रत्वात् न मु न इत्यत्र नेति योगविभागेनासिद्धत्वाभावाद्वा इष्टसिद्धेः ॥ वामनस्तु ग्लाजिस्थ इति सूत्रे स्था आ इति प्रश्लेषात् स्थास्नुरित्यत्र घुमास्था इतीत्वं न भविष्यतीति गकारप्रश्लेषाभावान्न श्रुग्रकः कितीत्यत्र चर्त्वस्यासिद्धत्वाभावसमर्थनक्लेश इत्याह । इग्लक्षणे इति । इक इत्येवं विहिते इत्यर्थः ॥ इग्लक्षणे किम् । लैगवायनः लिगोर्नडादित्वात्फक् इह्रादिवृद्धेरोर्गुणस्य च वस्तुगत्या इक्स्थानिकत्वेपि न निषेधः । न चेक इत्युक्तेपि किति चेत्यारम्भसामर्थ्यादत्र निषेधो न भवेदिति शङ्क्यम् । नाडायनादौ तस्य चरितार्थत्वात् ॥ भूयादिति । इह स्को इति लोपस्यासिद्धत्वात्तकारस्य संयोगान्तलोप प्राप्तः पदान्तसयोगादिलोपेनानवकाशेन बाध्यते ॥ नन्वेवमपि संयोगादिलोपस्य पूर्वत्रासिद्धमित्यसिद्धत्वाद्वल्यादिलोपः स्यादपदान्ते संयोगादिलोपस्य भ्रट् भ्रडित्यादौ नावकाशत्वादिति चेत् ॥ अत्राहुः । सुट्यासुटोः सतोस्ताभ्यां विशिष्टस्यैव प्रत्ययत्वेनाप्रवृत्तत्वाभावाद् वलन्तायाः प्रकृतेः परत्वाभावाच्चोक्तदोषशङ्कैव नास्तीति ॥ सर्वलकारापवाद इति । मास्त्वित्यादौ निषेधार्थकमाशब्दोऽन्य एव, न तु माङित्याहुः ॥ च्लि लुङि ॥ इकार उच्चारणार्थ इति मनोरमा ॥ न च मन्त्रे घसेति सूत्रे लेरिति स्थाने ल इत्युच्यमाने च्लिभिन्नस्यापि लकारस्य लुक् स्यादिति शङ्क्यम् ॥ गातिस्थेति सूत्रात्सिच इत्यनुवर्त्य सिच्स्थानिनः स्थान्यर्हस्य लस्य लुगिति व्याख्यायामतिप्रसङ्गाभावात् ॥ विभाषानुवृत्तेर्लुको वैकल्पिकतया छन्दसि रूपान्तरस्यानापाद्यतया च सिजनुवृत्तिं विनापि नातिप्रसङ्ग इत्याहुः ॥ शवाद्यपवाद इति । आदिशब्दात्तत्तद्गणप्रयुक्तानां श्यन्नादीनां ग्रहणम् ॥ इचावितावविति ॥ तत्र इदित्वे प्रयोजनममंस्तेत्यत्र अनिदितामित्युपधालोपाभावः ॥ गातिस्था ॥ इह व्यवहितोपि लुगनुवर्त्तते । न तु श्लुः, व्याख्यानादित्याशयेनाह । लुगिति ॥ गापाविति । गातीति श्तिपा विकरणशून्यस्य निर्देशाल्लुग्विकरण इणादेशो

गृह्यते । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति परिभाषया पिबतिर्गृह्यते, न तु पातिरित्यर्थः ॥ भूसुवोः ॥ षूङ् प्राणिगर्भविमोचने सुवति सूत्योस्तु न ग्रहणं तिङि विकरणेन व्यवधानात् ॥ अस्तिसिचोपृक्ते ॥ अत्र प्राञ्चः । अस्तिश्च सिच्चेति समाहारद्वन्द्वे अस्तिसिच् तस्मादिति विग्रहं मत्वा अस्तेः सिचश्च परस्येति व्याचख्युस्तच्चिन्त्यम् । तत्र समासान्तस्यानित्यत्वाश्रयेण द्वन्द्वाच्चुदषहान्तादिति प्राप्तस्य टचः परिहारेपि समुद्राभ्राद् घ इति निर्देशात् अल्पाच्तरमित्येतदनित्यमित्याश्रित्य सिच्छब्दस्य परत्वसमर्थनेपि अस्तेर्भूः इति भूभावस्य स्थानिवत्त्वमाश्रित्य तत्राऽपृक्तस्य हल ईडागमस्य दुर्वारत्वात् । तथा गातिस्थाघुपाभूभ्यः सिचो लुक्यपि स्थानिवद्भावेन सिचः परत्वानपायादगादस्थादभूदित्यादौ अतिप्रसङ्गाच्च । तदेतद् ध्वनयन् व्याचष्टे । सिचास् चेति । सौत्र भत्वमिति । तेनात्र कुत्वजश्त्वे न भवत इति भावः ॥ विद्यमानादिति । सिचोस्तेश्च विद्यमानविशेषणेन लुप्तात्सिचः कृतभूभावादस्तेश्च नेति भावः ॥ भाष्यकारास्त्वाहुः । अस्तिसिचोपृक्त इति द्विसकारकोयं निर्देश इति ॥ अत्र माधवः, अस् सेति समुदायस्याधातुतया इक्श्तिपौ धातुनिर्देश इति श्तिप्प्रत्ययो न स्यादिति ॥ अत्र वदन्ति । द्विसकारकनिर्देशे श्तिप् न स्यादिति यदुक्तम् ॥ तद्भ्रमोक्तिमात्रम् । इत्थं हि भाष्याशयः । सिच इत्यस्यानन्तरं सकारः प्रश्लिष्यते, न तु श्तिपः प्राक् । अत एव 'सिचोपृक्त इति द्विसकारकोयं निर्देश इत्युक्तं भाष्ये । अन्यथा अस्तीति निर्देशो द्विसकारक इत्येव ब्रूयात्, ॥ एवं च सान्तादस्तेः, सान्तात्सिच इति चार्थो निर्बाध एव ॥ द्वितीयश्च सकारो लुप्यते संयोगान्तस्य पदान्तस्येति व्याख्यानात् । व्यपदेशिवद्भावेन पदान्तत्वाद्द्वितीयसकारस्य । न च सयोगान्तलोपस्यासिद्धत्वात् अतो रोरित्युत्वं दुर्लभमिति वाच्यम् । संयोगान्तलोपो रोरुत्व इति वार्त्तिकेनासिद्धत्वनिषेधात् । सयोगान्तं यत्पदमिति व्याख्याने तु नेह संयोगान्तलोपः । किंतु सकारद्वयस्यापि रुत्वे कृते अतो रोरित्यनेन एक एव उकारो भविष्यति । विधेयविशेषणस्यैकत्वस्य पश्वेकत्ववद्विवक्षितत्वात् । न च स्थानिभेदेन उकारद्वये सत्यपि न क्षतिः, सवर्णदीर्घानन्तरमाद्गुणे सति समीहितरूपसिद्धेरिति वाच्यम् । एकपदाश्रयत्वेनान्तरङ्गत्वादाद्गुणे पश्चादवादेशप्रवृत्त्या सिचोपृक्त इति रूपासिद्धेः ॥ तस्मादुक्तरीत्या एक एवोकार इति स्वीकर्तव्यम् ॥ अत एव विधेयगतैकत्वस्य विवक्षितत्वाद् एकः पूर्वपरयोरित्यत्र इकग्रहणं भाष्यादौ प्रत्याख्यातम् ॥ नन्वति परे यो रुः स त्वतः परो न भवति, अतः परस्तु अति पू-

र्वी न भवतीति रुइयस्थाने कथमुकारः स्यात्॥ मैवम्। रोरिति जातिपरनिर्देशेनातः परत्वस्य पूर्वत्वस्य च संभवात्। न चैवमपि परत्वात् हशि चेति प्रथमस्यैव रोरु स्यादिति वाच्यम्। रुत्वस्यासिद्धतया हश्परत्वाभावात्। न चाश्रयासिद्धत्वमिति वाच्यम्। स्थान्यंशे तथात्वेपि निमित्तभूतहश्यंशे तदसंभवात्॥ यद्यपि सत्वजातेरेकत्वादुभयोरपि एक एव रुर्भवतीति व्याख्यायां नायं क्लेशः॥ तथापि रुत्वविधौ पदस्येत्यनुवर्तनादेकपदान्तत्वं न संभवति द्वितीयसकारस्य पृथक्पदत्वादित्याहुः॥ अपृक्तहल इति। अपृक्तसार्वधातुकस्येति प्राचोक्तं तु अयुक्तम्। एधिषि इत्यादावतिव्याप्तेः। सार्वधातुकग्रहणव्यावर्त्यालाभाच्च॥ आतः॥ सिज्ग्रहणमनुवर्त्तते, झेर्जुस् इति च। सिच आकाराच्च परस्य झेर्जुस्। तत्र प्रत्ययलक्षणेन सिचः परत्वम्, आकारात्तु श्रुत्या, एवं स्थिते फलितमाह। सिज्लुकीति। गातिस्थेति सूत्रेणेत्यर्थः। सिजभ्यस्तेति पूर्वसूत्रेणैवादन्तादपि सिद्धे नियमार्थोयमित्याह। आदन्तादेवेति॥ हेतुहेतुमद्भावादीति। अत्र केचित् आदिशब्देनाशंसावचनं गृह्यतइति व्याख्याय आशंसावचने लिङो यन्निमित्तं तत्रापि क्रियातिपत्तौ भविष्यति लृङ् गुरुश्चेदायास्यत् आशंसेहमध्येष्ये इत्याद्युदाहरन्ति॥ अन्ये तु भविष्यति मर्यादेत्यादिना भविष्यतीत्युपक्रम्य यो यो लिङ् विहितः तन्निमित्त एव क्रियातिपत्तौ लृङ् भवति नान्यत्रेत्याहुः॥ लिङ्निमित्तमिति। हेतुहेतुमतोर्लिङिच्छार्थेषु लिङ्लोटावित्यादि लकारार्थप्रक्रियायां स्फुटीभविष्यति॥ अनिष्पत्ताविति। सुवृष्टिश्चेदभविष्यत्तदा सुभिक्षमभविष्यदिति तत्रैवोदाहरिष्यति॥ प्रागेवेति। न परतः नापि व्यवहित इत्यर्थः॥ अत एव छन्दसि परेपि व्यवहिताश्च इति सूचितम्॥ आनि लोट्॥ नि लोडित्येव वक्तव्ये आनिग्रहणमागमशास्त्रस्यानित्यतां ज्ञापयितुम्। तेन साग्रं तत्र्कारस्य जपत्वा स्तोत्रमित्यादि सिध्यति। लोट्ग्रहणं स्पष्टप्रतिपत्त्यर्थम्। न च प्रकृष्टा वपा येषां तानि प्रवपानि मांसानीत्यत्राप्यनेन नित्यं णत्वं स्यादिति वाच्यम्। उपसर्गग्रहणादर्थवद्ग्रहणाच्चास्याप्रवृत्तेः॥ प्रातिपदिकान्तेति वैकल्पिकं णत्वं तु इष्यत एव॥ दुरः षत्वेति॥ दुरः परस्य णत्वं नेति केचिदिति प्राचोक्तं त्वयुक्तम्। एवं हि सिद्धान्ते णत्वं स्यात् तच्चाकरविरुद्धमिति भावः॥ अन्तर्धेति। आतश्चोपसर्ग इत्यङ् टाप्॥ अन्तर्धिरिति। उपसर्गे घोः कि रन्तश्शब्दस्याङ्कविधावुपसर्गत्वमुपसंख्यायते, तत्तु प्रकृतानुपयोगादुपेक्षितम्। भिदादिपाठेन प्रज्ञाश्रद्धेति निपातनेन वा गतार्थत्वाच्च॥ शेषे विभाषा॥ नेर्गदनदेति सूत्रोक्तापेक्षया शेष इत्याह। गदनदादेरन्यस्मिन्निति॥ उपदेशे किम्। प्रनिचकार प्रनिच-

खादेत्यत्रापि निषेधो यथा स्यात् ॥ षषान्तेति किम् । प्रनिपिनष्टि । उपदेशग्रहणात् प्रनिपेक्ष्यति, चक्षिङः ख्याञ् प्रनिचक्ष्ये, इत्यत्रापि निषेधः ॥ शेषग्रहणं स्पष्टार्थम् ॥ णत्वशास्त्रे संहितायामित्यधिकारात् संहितायामविवक्षितायां णत्वाभावः । संहितायां तु णत्वमिति विकल्पसिद्धेः किमनेन विभाषाग्रहणेनेत्याशङ्का न कार्येत्याह । इहोपसर्गाणामित्यादि । एकपद इत्यनेनैव सिद्धे समासग्रहणं गोबलीवर्दन्यायेनेति बोध्यम् । वाक्ये त्विति ॥ सा संहिता विवक्षाधीना, न तत्र नित्येत्यर्थः ॥ उपलक्षणमिति । एतच्च सत्ताद्यर्थनिर्देशं कृतवतो भीमसेनस्यापि संमतमित्यत्र कुर्द खुर्द गुर्द गुद क्रीडायामेवेत्येवकारो ज्ञापकः । सेधतेर्गताविति सूत्रे गताविर्त्येतदपि षिध गत्यामित्याद्यर्थनिर्देशस्योपलक्षणत्व एव घटते नान्यथेति दिक् ॥ उत्पद्यत इत्याद्यर्थादिति । एवं च उपसर्गं विनाप्युत्पत्त्यर्थप्रतीतिरुद्भवतीत्यादौ प्रयुज्यमानोऽप्युपसर्गः द्योतक एव, न तु वाचक इति भावः ॥ उपसर्गेण धात्वर्थ इति । अत एवाऽमरेणाप्युक्तम् स्यादाभाषणमालापः प्रलापोऽनर्थकं वचः । अनुलापो मुहुर्भाषा विलापः परिदेवनम् ॥ विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः । सुप्रलापः सुवचनमपलापस्तु निन्हवः इति ॥ टित आत्मने ॥ ननु ग्रामचोपि लस्थानिकात्मनेपदत्वात्पचमानो यजमान इत्यत्र टेरेत्वेन भवितव्यमिति चेत् ॥ अत्राहुः । प्रकृतेस्तिबादिभिरात्मनेपदानां विशेषणान्न दोषः । एवं तु टितस्तङां टेर इत्येव वक्तुमुचितमिति ॥ थासः से ॥ एकारोच्चारणं ज्ञापनार्थमिति लिटस्तझयोरित्यत्र स्फुटीभविष्यति ॥ अतो गुणे इति । इट एत्वे कृते आद्गुणं बाधित्वा इहो प्राप्तायामनेन पररूपमित्यर्थः ॥ इजादेश्च ॥ धातोरेकाच इत्यतो धातुग्रहणं कास्प्रत्ययादित्यत आम् लिटी ति चाऽनुवर्तत इत्याह । इजादिर्यो धातुरित्यादि ॥ गुरुमान् किम् । इयेष । ऋच्छेस्त्वानर्च्छ ॥ आमः ॥ लक्षणप्रतिपदोक्तपरिभाषया प्रत्ययग्रहणपरिभाषया च नेह । आम । आमतुः ॥ परस्य लुगिति । मन्त्रे घस इति सूत्रात्लेरित्यनुवर्त्य लेर्लुगिति काशिकादौ व्याख्यातम् । तदत्रोपेक्षितं व्यवस्थालाभात् । तिङोपवादत्वाल्लावस्थायामेवायं लुक् । तेन आमन्तस्याऽतिङन्तत्वाद् देवदत्तादिपदात् परत्वेपि तिङ्ङतिङ इति न निघातः । आमन्तात् परस्य निघातश्च । न चातिङ्न्तत्वे पदत्वाभावादामन्तात्परस्य निघातो न सिध्यतीति शङ्क्यम् । लिटः कत्वात् प्रत्ययलक्षणेन कृदन्ततया प्रातिपदिकत्वे सोरुत्पत्तावामन्तस्याव्ययत्वात्सुपो लुक्यपि प्रत्ययलक्षणेन सुबन्ततया पदत्वात् ॥ कृञ् चानुप्रयुज्यते ॥ कथं तर्हि तं पातयां प्रथममास पपात पश्चात् प्रभ्रंशयां यो नहुषं चकारेति ॥

प्रमाद एवायम् ॥ न च विपरीतप्रयोगनिवृत्तिमात्रे सूत्रस्य तात्पर्यात्पश्चात्प्रयोगो व्यवहितोपि न दुष्यतीति वाच्यम्, विपर्यासनिवृत्त्यर्थं व्यवहितनिवृत्त्यर्थं च इति वार्तिकविरोधात् ॥ अन्यस्यापीति । यदि इह कृञ्शब्देन एक एव धातुर्गृह्येत, तदा धात्वन्तरस्य प्राप्त्यभावात् आम् प्रत्ययवदिति सूत्रेऽनुप्रयुज्यमानस्य कृञ इति विशेषणं व्यर्थं स्यादिति भावः । न चात्र कृञ् चेति चकारेणैवाऽनुप्रयोगोन्यस्यापीति ज्ञायत इति शङ्क्यम् । धातोराम् स्यात् अनुप्रयुज्यते च लिट्परः कश्चित्यर्थसमर्पकतया तस्योपक्षीणत्वात् ॥ अभेदान्वय इति । सामान्यविशेषयोरभेदान्वयो लोकसिद्ध इति भावः ॥ एवं चैधांचक्रे एधांबभूवेत्यादौ एककर्तृकभूतानद्यतनपरोक्षा वृद्ध्यभिन्ना क्रियेति तुल्यो बोधः । ननु करोतिः सकर्मकः, भवतिस्त्वकर्मक इति कथमिह तुल्यतेति चेत् ॥ अत्राहुः । यदा हि करोतिरुत्पादनार्थकः स्वातन्त्र्येण प्रयुज्यते घटं चक्रे, राज्यं चकारेति, तदा नियमेन सकर्मकत्वम् । यदा तु क्रियान्तरसमानाधिकरणः करोतिः प्रयुज्यते जुहवांचकारेत्यादौ, तदा यत्समानाधिकरणः करोतिस्तस्य सकर्मकत्वाकर्मकत्वाभ्यां स्वयमपि तथाभावं भजते । एवं भ्वस्त्योरप्याम्प्रकृतिसामानाधिकरण्येन क्वचित्सकर्मकत्वं बोध्यम् । अत एवानुप्रयुज्यमानोभवतिः सकर्मकत्वात्कर्मणि लिट् । तथाच माघः तस्याऽतपत्रं विभरांबभूवे इति । श्रीहर्षश्च तपर्तुपूर्तावपि मेदसां भरा विभावरीभिर्विभरांबभूविरे इति । अत्रेदमवधेयम् । जुहाव जुहवांचकार जुहवांबभूवेत्यादौ केवले केवलो होमो गम्यते, इतरत्र तु होमरूपा क्रियेति बोधः । फले तु न कश्चिद्विशेषः । घटमानय, द्रव्यं घटमानयेत्यत्र यथा । एवं चाम्प्रकृत्यर्थंगतकारकसंख्याविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति ॥ अनन्वितेति । संपद्यर्थस्याम्प्रकृत्यर्थस्य चाभेदान्वयो न संभवति उभयोरपि विशेषरूपत्वादिति भावः ॥ आम्प्रत्ययवत् ॥ आम्प्रत्ययान्तस्यात्मनेपदाभावादाह । अतद्गुण इति ॥ आम् प्रकृत्या तुल्यमनुप्रयुज्यमानादिति । तृतीयान्तादिति । अनुप्रयोगस्येत्यत्र कर्मणि घञ् इति भावः ॥ अनुदात्तङित इत्यतोऽनुवर्तनादाह । आत्मनेपदं स्यादिति । एवमप्राप्तस्य विधानेपि प्राप्तस्य निवारणमनेनैव सूत्रेण न संभवतीत्यत आह । वाक्यभेदेनेति । अत्र च प्रमाणम् आम्प्रत्ययवदिति वचनमेव । अन्यथा पूर्ववदित्यनुवृत्त्यैवाऽनुप्रयोगस्य कृञः आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन आम्प्रत्ययवदित्यनेन ॥ लिटस्तझयोः ॥ एशिति शकारकरणमकारविशिष्टतकारस्यादेशत्वाय ॥ असंयोगात् ॥ असंयोगादिति किम् । ममन्थे । अत्र नलोपो न ॥ द्विर्वचनेचि ॥ अचा सामानाधिकरण्यलाभाय द्विर्वचनशब्दस्य

तन्निमित्ते लक्षणा स्वीक्रियते । यद्वा । उच्यते इति वचनं द्विर्वचनं यस्मिन्नचि तद्द्विर्वचनम् । अथवा द्विर्वचनमस्मिन्नस्तीत्यर्शआद्यच् । तदेतदाह । द्वित्वनिमित्तेऽचीति । इह अचः परस्मिन्निति निवृत्तोऽच इति स्थानिवदादेशइत्यस्मादादेश इति, नपदान्तेत्यतो नेति चानुवर्त्तते तदाह । अच आदेशो न स्यादिति ॥ यद्यपीह वृत्त्यादौ अजादेशः स्थानिवत् स्यादिति रूपातिदेशपक्षः स्वीकृतः फलं चोभयत्र तुल्यम् ॥ तथाप्यादेशनिषेधपक्षोऽपि भाष्यारूढ इति स एवात्र ॥ किं च आदेशमंगीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायात् । न पदान्तेति निषेधानन्तरं पाठोऽप्येवं सत्यनुगृह्यते इति श्रेयानयं पक्षः । इष्टानुरोधेन द्विर्वचन इत्यावर्त्य कालावधारणपरतयापि व्याचष्टे। द्वित्वे इति । कृते तु द्वित्वे यथायथमादेशः स्यादेवेति भावः।द्वित्वनिमित्ते किम्।दुद्यूषतीत्यत्र द्वित्वात् परत्वादूठि कृते यदि यण् पूर्वमेव द्वित्वं स्यात्, तदा दिद्यूषतीत्यनिष्टं रूपं स्यात्तन्माभूदिति द्वित्वनिमित्ते इत्युक्तम् । न तूठ् द्वित्वनिमित्तम् ॥ अचीति किम्। जेघ्रीयते । देध्मीयते । शाशय्यते । इह ई घ्राध्मोरिति ईकारः अयङ् यि क्ङितीत्ययङादेशश्च निषिध्येत स माभूदिति प्राञ्चः ॥ अन्ये त्वाहुः । अचीति व्यर्थं घ्रीय् ध्मीय् शय्य इति द्वितीयाजवधिकस्यैकाचः कार्यितया यङो द्वित्वनिमित्तत्वाभावादिति ॥ अचः किम्। असूषुपत् । इह स्वापेश्चङीति यत्संप्रसारणं तस्मिन्निषिद्धेऽभ्यासे उवर्णो न श्रूयेत। नच द्वित्वे कृते पुनः संप्रसारणे स्वापेरवयवत्वाविशेषादभ्यासे तदुत्तरखण्डे च उकारश्रवणं भवेदिति वाच्यम् । परस्य संप्रसारणे कृते यून इत्यत्रेव न संप्रसारणे इति पूर्वस्य यणः संप्रसारणनिषेधात् ॥ स्यादेतत् । चक्रतुरित्यत्र अच आदेशस्य निषेधाप्रवृत्त्या यण् स्यादेव । अतुसो द्वित्वनिमित्तत्वेऽपि अकारस्याऽतथात्वात् । न च द्विर्वचनेचीत्यस्य वैयर्थ्यम् । चक्रे इत्यादौ सावकाशत्वात् । तथा चैकाच्त्वाभावात् लिटि धातोरितीह द्वित्वं न स्यादिति चेन्मैवम् । इह द्वित्वनिमित्तशब्देन साक्षाद्वा समुदायघटकतया वा यत् द्वित्वप्रयोजकं लक्षणानुरोधेन तस्य सर्वस्य ग्रहणात्। एतच्च ठस्येक इति सूत्रे कैयटे स्पष्टम् । तथाच ऊर्णोतेः सनि सनीवन्तर्धेतीट्पक्षे विभाषोर्णोरिति ङित्त्वविरहे ऊर्णु नविषतीति सिद्धम् । सन्नन्तस्य द्वित्वविधाने सनो द्वित्वप्रयोजकत्वेन तस्मिन्परे प्राप्तयोर्गुणावादेशयोर्द्वित्वे कर्तव्ये निषेधात् । अत एवाहुस्तद्भावभाविताभावमात्रेणेह निमित्तत्वमिति । एवं च द्वित्वनिमित्तघटकतया सन इडागमो तुसो ऽकारश्च द्वित्वनिमित्तमिति स्थितम् ॥ नन्वेवमृधातोः सनि स्मिपूङ्रञ्ज्वशां सनीति इटि कृते इस्शब्दनि-

मित्तकस्य गुणस्य द्विवचनेऽचीति निषेधे अजादेर्द्वितीयस्येति द्वित्वप्रसङ्गाददरिरिषतीति न सिध्येत् । रिस्शब्दस्य द्वित्वे तु यद्यपि सिध्यति । तथापि गुणनिषेधे रिस्शब्द एव दुर्लभ इति चेद् ॥ अत्राहुः । गुणे रपरे कृते रिम्शब्दस्यैव द्वित्वम् । नच द्वित्वनिमित्ते ह्यचि गुणस्य निषेधः इस्शब्दस्तु नेह निमित्तम् । कार्यित्वात् । न हि कार्यी निमित्ततयाऽऽश्रीयते । स्थण्डिलाच्छयितरि व्रत इतिज्ञापकात् । अन्यथा शीङो ङित्त्वेन क्ङिति चेति गुणनिषेधाच्छयितरीति रूपस्यासिद्ध्यापत्तेः । न च क्ङिति ङिति परे गुणवृद्धी नेति व्याख्यायासुत्रार्थ शयितरीति न ज्ञापकमिति वाच्यम् । तद्व्याख्यायां छिन्नं भिन्नमित्यत्र गुणनिषेधो न स्यादित्यादिदोषस्य क्ङितीति च इति सूत्र एवोपपादितत्वात् । न चैवं कार्यिणो निमित्तत्वानाश्रयणे सन्नन्तस्य कार्यित्वात्सनि परतः प्राप्तयोः गुणावादेशयोरनिषेधादूर्णुनविषतीत्यपि न स्यादिति वाच्यम् । मत्वर्थीयेनेनिना कार्यमनुभवत एव कार्यित्वलाभात् ऊर्णोतेर्हि नुशब्द एव द्वित्वरूपकार्यमनुभवति न तु सन् । अरिषतीत्यत्र तु रिस्शब्द कार्यभागिति वैषम्यादिति । उभयान्वयीति । मध्ये पाठाद्देहलीदीपन्यायेन पूर्वोत्तराभ्यां संबध्यत इत्यर्थः । तत्रोत्तरान्वयस्य कर्तुं गन्तुमित्यादाविण्निषेधः फलम् । नित्स्वरेण संप्रत्युदात्तत्वात् ॥ पिपक्षति बिभत्सतीत्यादाविण्निषेधस्तु पूर्वान्वयस्य फलम् । द्वित्वे कृते अनेकाच्त्वात् ॥ नन्वेकाच इत्युक्ते ह्युपदेशपदेनाप्यन्वयः स्वीकर्तव्यस्तदेव मास्तु उपदेशेऽनुदात्तादित्यनेनैवेष्टसिद्धेरिति शङ्कते । एकाचः किमिति ॥ पिपक्षतीत्यादाविव यङ्लुक्यपि इण्निषेधः स्यादेवेत्याशङ्कायामाह । स्मरन्ति हीति । श्तिपेत्यादि । श्तिपा यथा स्यतिहन्तियातिवातिद्रातीत्यादि । तेन प्रन्यजन्घनीदित्यादौ नेर्गदेति णत्वं न ॥ शपा यथा भरेति । तेन बिभर्तेः भरतेः ( यङ्लुगन्तात् ) सनि बर्भरिषतीत्यत्र सनीवन्तर्धेतीड्विकल्पो न, किंतु नित्यमेवेट् एकाचेति निषेधाप्रवृत्तेः ॥ अनुबन्धेन निर्देशोद्विधा स्वरूपेणेत्सञ्ज्ञकत्वेन च । स्वरूपेण यथा । शीङः सार्वधातुके गुणः दीङो युडचीति । शेशीतः । देदितः । तासि क्तप्रत्यये चेमे क्रमेणोदाहरणे ॥ इत्संज्ञकत्वेन यथा । अनुदात्तङितः तेन स्पर्ध शीङादिभ्यः अनुदात्तङित इत्यात्मनेपदं न । पास्पर्धीति । शेशयीति ॥ गणेन यथा । वेभिदीति । रुदादिभ्यः इति अम् न ॥ एकाच्ग्रहण प्रकृतसूत्रे । तेन बेभेदिता चेच्छेदितेत्यादाविण्निषेधो न ॥ एतच्चेति । न च श्तिपा शपाद्यंशे कथमिदं ज्ञापकमिति शङ्क्यम् । एकदेशानुमतिद्वारा सर्वत्र ज्ञापनस्य उपपदमतिङित्यादौ दृष्टत्वात् । अत एव तत्र गतिकारकोपपदानां कृद्भिः सह समास-

वचनं प्राक् सुबुत्पत्तेः इति सिद्धमित्युक्तम् ॥ अनन्यार्थैः स्यतिहन्तिभिरेत्यादि-भिः श्यतिबादिभिरेव ज्ञापनसंभवाच्च । अपरस्परा इति सूत्रे सातत्यग्रहणेन एकदेशानुमत्या लुम्पेदवश्यमः कृत्य इत्यादिपूर्वाचार्यश्लोको ज्ञापितः इति तु तत्रावोचाम । मनोरमायां तु एकदेशानुमतिद्वारा पूर्वाचार्यपठितपरिभाषायाः ज्ञापनस्य गतिकारकोपपदानामित्यादौ दृष्टत्वादित्युक्तम् तदयुक्तमिति नव्याः । गतिकारकोपपदानामित्याद्येव हि पूर्वाचार्याणां परिभाषा, न च तज्ज्ञापनं तत्रैव दृष्टमिति युज्यते वक्तुमिति ॥ तद्वत इति । न च मत्वर्थलक्षणायां मानाभावः । वसत्यादीनामनुदात्तपाठस्यैव तत्र मानत्वात् । न चेदानीमनुदात्तपाठः परिभ्रष्टः, आधुनिकायां वसतिश्लिष्यादिपाठस्तु अनार्षत्वान्न मानमिति शङ्क्यम् । पाणिनिना पठितानामिवानुदात्तधातूनामाधुनिकैर्व्याख्यातृपरम्परया संगृहीतत्वात् । अन्यथा एकः अच् यस्येति बहुव्रीहिलाभार्थमेकग्रहणे कृतेप्यनुदात्तपाठस्य परिभ्रष्टत्वात् वसतिश्लिष्यादयोऽनुदात्ताः, न तु भेधादय इति निर्धारणं न स्यात् ॥ एकग्रहणेति । नन्वेकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमित्युक्त्वा पुनरेकग्रहणसामर्थ्यादित्युक्तौ परस्परव्याघातः स्याद् इति चेत् ॥ अत्राहुः । एकाच्शब्देन एकाज्ग्रहणं यङ्लुग्व्यावृत्त्यर्थमिति नार्थः किं तु वस्तुगत्यैवैकाज्ग्रहण तत्रैकग्रहणं विनैव लभ्यत इत्यदोष इति ॥ वधेरिति । यस्तु तद्व्यावृत्तये अनिट्कारिकासु अदन्तपर्युदास उक्तो व्याघ्रभूतिना । स एव प्राचाऽनुसृतः अदृष्टदन्तरुस्नुच्चणुशीयुनुक्षुश्विडोङ्श्रिभिः । वृङ्वृञ्भ्यां च विनैकाचः स्वरान्ता धातवोऽनिट इति । स चादन्तपर्युदास इहोपेक्षितः । सूत्राऽननुगुणत्वात् । तथाहि सर्वे सर्वपदादेश इति न्यायेन कृइत्यादेः करित्यादेशस्तस्य यथास्थान्युपदेशं गृहीत्वा कर्ता हर्तेत्यादौ निषेधः प्रवर्तते तथैव वधादेशेपि प्रवर्तमानः केन वार्यताम् । अदन्तपर्युदास सामर्थ्या दिति चेन्न । सूत्रेणापर्युदस्तत्वादिति भावः ॥ इणः षीध्वम् ॥ इण्कोरित्यधिकारेपि पुनरिण्ग्रहणं कवर्गात्परस्य माभूदित्येतदर्थम् । तेनेह न । पक्षीध्वम् ॥ अङ्गात् परेषामिति । विहितानामित्युक्तौ तु दाओ लुङि अदिढ्वमित्यत्राव्याप्तिः स्यात्, लिहदुहनहां ढत्वघत्वधत्वेषु लिक्षीध्व धुक्षीध्वं नत्सीध्वमित्यत्राऽतिव्याप्तिश्च स्यादिति बोध्यम् ॥ अङ्गात् किम् । वेविषीध्वम् । यद्यप्यर्थवतः षीध्वमित्यस्य ग्रहणात् कृषीढ्वमित्यादावेव भवेत् । तथापि अर्थवद्ग्रहणपरिभाषा क्वचिन्न प्रवर्तत इति ज्ञापनार्थमिदमुक्तम् । तेन अनिनस्मन्ग्रहणानीति सिद्धम् ॥ एधांबभूवेत्यादि । आम्प्रत्ययवदिति सूत्रे कृञ्ग्रहणाद्

अनुप्रयोगान्तरे तङ् नेति शेषात्कर्तरीति परस्मैपदमेव । भावकर्मणोस्तु स्यादेव । एधांबभूवे ईक्षांबभूवे इति । अस्तेस्तु भावकर्मणोर्लिङि कृते एधि इटि च रूपे विप्रतिपद्येते । तथाहि । उभयत्रापि ह एतीति हादेशे कृते एधामहि ईक्षामहीति केचित् । तासिसाहचर्यादिव्येव हत्वं न त्वेशीत्यन्ये ॥ तत्साहचर्यादेव सार्वधातुक एव एति हत्वम् । तथा च कर्मव्यतिहारे तङि व्यतिहे इत्यत्रैव भवति न तूक्तद्वयेपि । तेन एधामासे ईक्षामासे इत्येव रूपमित्यपरे ॥ कृभ्वितीति । यद्यपि कृञ इत्युक्तौ लाघवमस्ति । तथापि धातुद्वयस्यैव लाभार्थं प्रत्याहाराश्रयणे क्लेश इति भावः ॥ पररूपापवाद इति । अपवाद इत्यय ग्रन्थो नामधातुप्रक्रियास्थस्वग्रन्थेन सह विरुध्यते । तत्र हि अ इवाचरति अति । प्रत्ययग्रहणमपनीय कास्यनेकाच इत्युक्तेर्नाम् । औ । अतु । उः । द्वित्वम् । अतो गुणे । अत आदेरिति दीर्घः । णल औ । वृद्धिरित्युक्तत्वात् । हलादिः शेषात् प्रागेव परत्वात् अत आदेरिति दीर्घे कृते तु पररूपशङ्कापि तत्र नास्तीति चिन्त्योयं ग्रन्थ इति नव्याः ॥ आडजादीनाम् । एतच्च अजादीनामटा सिद्धमिति वार्तिककृता प्रत्याख्यातम् ॥ ननु अटि सति वृद्धिरेचीत्यनेन ऐधतेत्यादिसिद्धावपि ऐन्ददित्यादि न सिध्येत् । किं चातो गुण इति पररूपप्रवृत्त्या ऐधतेत्याद्यपि न सिद्ध्येत् । यदि तु अटश्चेति क्रियेत तर्हि अस्वपोऽहमद् इत्यत्र वृद्धिः स्यात् । रुदश्च पञ्चभ्यः अट्गार्ग्यगालवयोरिति अडागमस्य सत्त्वादतो रोरप्लुतादिति रोरुत्वे सति अच्परत्वाच्चेति चेत्, न । उपसर्गादृति धाताविव्यपकृष्याजादौ धाताविति व्याख्यानात् । न च अस्वपोस्तीत्यादावोकारस्यान्तवद्भावेनाट्त्वात्परत्वाजादिधातुमत्त्वाच्चोक्तदोषस्तदवस्थ इति वाच्यम् । आदित्यनुवर्त्य अकाररूपादटोऽचि परे वृद्धिरिति व्याख्यानात् । एतेनाटश्चेत्युक्तावट गताविव्यस्माल्लुटि अटनमित्यत्रापि प्रसङ्गः स्यादित्येतदपि निरस्तम् ॥ न चैवमपि आतद् आतोद् इत्यादि न सिध्यति । अटश्चेत्यस्य ऐन्ददित्यादौ सावकाशतया परत्वादिह अतो गुणस्यैव प्रवृत्तेरिति वाच्यम् । चकारोत्र पुनर्वृद्धिविधानार्थ इत्यभ्युपगमादन्तरङ्गत्वाद्वा अटश्चेत्यस्यैव प्रवृत्तेः ॥ स्यादेतत् । आडजादीनामिति सूत्राभावे आस्तामासन् इति कथमटा सिध्यति । श्नसोरित्यल्लोपेन अटश्चेति तत्र वृद्ध्यप्रवृत्तेः । मैवम् । अन्तरङ्गत्वात् प्रागेवाडागमे कृते वृद्धौ च कृतायां पश्चात् श्नसोरल्लोप इत्यस्याप्रसक्तेः । न च वार्णादांगं बलीय इति वृद्धेः प्रागल्लोप एव स्यादिति शक्यम् । व्याश्रयत्वात्, वार्णादाङ्गमिति परिभाषाया अनित्यत्वाद्वा । तत्र हि श्नसोरल्लोप इति तपरकरणमेव लिङ्गम् । यदि वृद्धेः प्रागेवा-

ल्लोपः स्यात्, तर्हि किं तेन तपरकरणेनेति ॥ यद्यपि वैदिकप्रक्रियायामानट् आव इत्यादौ छन्दस्यपि दृश्यत इत्याडागमस्य वक्ष्यमाणत्वात्तदर्थमाट्सूत्रं कर्तव्यम् तथाप्याटं विनैवाङ्व्यत्ययेन आङ्पूर्वकत्वेन वा तत्र कथंचिद् व्याख्येयमिति स्थितस्य गतिमाहुः ॥ सलोप इति ॥ लिङः सलोपोऽनन्त्यस्येत्यनेन ॥ एधेयातामिति । सीयुटः सलोपे आद् गुणः ॥ एधिषीध्वमिति ॥ इणः परत्वेपि इणन्तादङ्गात् परत्वाभावात् इणः षीध्वमिति ढत्वं न भवति ॥ आत्मने । झोन्त इत्यतो झ इति अदभ्यस्तादित्यस्मात् अदिति चानुवर्तते तदाह । झस्यात्स्यादिति ॥ आत्मनेपदेषु किम् । अदन्ति । सुन्वन्ति ॥ अनतः किम् । एधन्ते । प्लवन्ते ॥ इड्भिन्न एवेणिति । विभाषेट इति इटो विशिष्य ग्रहणाद्गोबलीवर्दन्यायेन केश्चिदिड्भिन्न एवेणिह गृह्यत इति भावः ॥ ऊदृदन्तैरिति । ऊदृदन्तैर्विना यौत्यादिभिर्विना वृङ्वृञ्भ्यां विना च अन्ये ये एकाचोऽजन्तास्ते निहताः अनुदात्ता इत्यर्थः । तथा च दाता धाता चेता स्तोतेत्यादिषु इण् न भवति । ऊदन्ताः भूलूप्रभृतयः । ॠदन्ताः कॄतॄप्रभृतयः । यु मिश्रणादौ । रु शब्दे रुङ् गतिरेषणयोरित्युभयोर्ग्रहणम् । निरनुबन्धपरिभाषया लुग्विकरणाऽलुग्विकरणयोरिति परिभाषया च । सच साहचर्याल्लुग्विकरणस्यैव ग्रहणमिति शङ्क्यम् । तस्या अनित्यत्वात् ॥ क्ष्णु तेजने । शीङ् स्वप्ने । स्नु प्रस्रवणे । णु स्तुतौ । टुक्षु शब्दे । टुओश्वि गतिवृद्ध्योः । डीङ् विहायसा गतौ । श्रिञ् सेवायाम् । वृङ् सभक्तौ । वृञ् वरणे ॥ नन्वेतद्भिन्नानामेकाचामेवानुदात्तत्वे ऊर्णुतः ऊर्णुतवानित्यादि न सिध्येदिति चेत् । मैवम् । ऊर्णोतेर्णुवद्भावो वाच्य इति वक्ष्यमाणवार्तिकेनेष्टसिद्धेः । अत एव ऊर्णोनूयते इत्यत्र धातोरेकाच इति यङ् । ऊर्णुनावेत्यत्रानेकाच्त्वेन प्रवृत्तस्यामोभावश्च सिध्यति । उक्तं च भाष्ये वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् । आमश्च प्रतिषेधार्थमेकाचश्चेदुपग्रहाद् ॥ इति । विभाषा गुणेऽस्त्रियामिति हेताविय पञ्चमी । हेतुरिह फलम् । एतच्च कैय्यटे स्पष्टम् । उपग्रहः प्रतिषेधः । इट्प्रतिषेधार्थमित्यर्थः । एवं च णुवद्भावेनैकाच्त्वात् श्र्युकः कितीति निषेधप्रवृत्तेरूर्णुत इत्यादि सिध्यति । एकाच उपदेशे इतीण्निषेधस्तु न प्रवर्तते । णुवद्भावेनैकाच्त्वेप्यनुदात्तत्वाभावात् ऊर्णुधातोर्णुधातोश्च उदात्तत्वात् तथा चोर्णुविता और्णावीदित्याद्यपि सिद्धम् ॥ वसतिशक्लृघस्लृभ्य इति प्राचो ग्रन्थस्य पाठमुपेक्ष्य हलन्तेषु कादिक्रमेणाह । शक्लृ इति । कान्त एकः ॥ चान्तेषु पच् मुच्रिच्वच्विच्सिचः षट् ॥ डुपचष् पाके । पचि व्यक्तीकरणे । द्वावपि पाचित्यनेन गृह्येते । मुच्लृ मोक्षणे ॥ रिचित्यनेन रिचिर् विरेके ।

रिच वियोजनसंपर्चनयोरिति यौजादिकश्च गृह्यते ॥ वचित्यनेन तु वच परिभाषणे ब्रुवो वचिरपि । वचिर्यौजादिकोपि गृह्यते ॥ विचिर्त्वरणभावे । षिच चरणे ॥ छान्तेषु प्रच्छिरेकः ॥ जान्तेषु त्यज्निजिर्भज्भञ्जभुज्भ्रस्ज्मस्ज्यज्युज्रुज्रञ्जविजिर्स्वञ्जसञ्जसृजः पञ्चदश ॥ भुजित्यनेन भुज पालनाभ्यवहारयोः, भुजो कौटिल्ये इति च गृह्यते ॥ युजित्यनेन युजिर् योगे, युज समाधाविति च गृह्यते ॥ केचित्तु व्याघ्रभूतिश्लोके भाष्ये च युजित्येतत् युजिर् योग इत्येकदेशोच्चारणमित्याहुः ॥ तन्मते युज् समाधौ सेट् ॥ सृजित्यनेन तु सृज् विसर्गे दिवादिस्तुदादिश्च गृह्यते ॥ दान्तेषु अद्तुद्खिद्छिद्तुद्नुद्पद्यभिद्विद्यति विनद्शद्सद्खिद्यस्कन्द्हदः पञ्चदश ॥ खिदित्यनेन खिद दैन्ये खिद्यति खिन्दतिः खिनत्तिश्च गृह्यन्ते ॥ विद्यतीति । विद सत्तायाम् ॥ विन्तेति विद विचारणे ॥ धान्तेषु क्रुध् क्षुध्बुध्यबन्ध्युध्रुध्राध्व्यध्शुध्साध्सिध्या एकादश । रुधित्यनेन रुधिर् आवरणे । अनो रुध कामे इति दिवादिः गृह्यते ॥ नान्तेषु मन्यहनी द्वौ ॥ मन ज्ञाने दिवादिः ॥ पान्तेषु आप्क्षिप्छुप्तप्तिप्तृप्यदृप्यलिप्लुप्वप्शप्स्वप्सृपस्त्रयोदश ॥ क्षिपित्यनेन क्षिप् प्रेरणे क्षिप्यति क्षिपतिश्च गृह्यते ॥ छुप स्पर्शे । तपित्यनेन तप संतापे, तप ऐश्वर्ये दिवादिः, तप दाहे इत्यपि णिजभावपक्षे गृह्यते ॥ तिपृ क्षरणे तृप्यतिदृप्यत्योर्वेट्कत्वेपि अनुदात्तस्य चर्दुपधस्येत्यमर्थोयं पाठः ॥ भान्तेषु यभ्रभ्लभस्त्रयः ॥ मान्तेषु गम्नम्यम्रमश्चत्वारः ॥ शान्तेषु क्रुशदंश्दिश्दृश्मृश्रिश्रुश्लिश्विश्स्पृशो दश । रिश् रुश् हिंसायाम् । लिशित्यनेन लिश् अल्पीभावे दिवादिः, लिश् गतौ तुदादिश्च गृह्येते । षांतेषु कृष्त्विष्तुष्द्विष्दुष्पुष्यपिष्विष्शिष्शुष्श्लिष्या एकादश । कृषिति भौवादिकतौदादिकौ गृह्येते । विषित्यनेन विष्लृव्याप्तौ तिष्विष्मिषिति दण्डकस्थोपि गृह्यते । शिषित्यनेन शिष्लृ विशेषणे कष खष शिषेति दण्डकस्थश्च गृह्यते । विषिति विष्लृ व्याप्ताविति जौहोत्यादिक एव गृह्यते न दण्डकस्थः ॥ शिषित्यनेनापि शिष्लृ विशेषण इति रौधादिक एव न तु दण्डकस्थ इति बोपदेवादयः ॥ सान्तेषु घस्लृवसती द्वौ, घस्लृ अदने, लुङ्सनोर्घस्लृ इत्यत्त रादेशस्य तु स्थान्यनुदात्तत्वेनापि सिद्धम् ॥ हान्तेषु दहदिहदुहमिहनहरुहलिहवहोष्टौ ॥ दुहित्यनेन दुहिरिति भौवादिको न गृह्यते किंतु दुह प्रपूरणे इति आदादिक एवेति प्राञ्चः ॥ इह मनोरमायां सग्रहश्लोक उक्तः कचच्छजा दधनपा भमशाः षसहाः क्रमात् । कचकाणणटा खण्डो गघजाष्टखजा स्मृता इति । तत्र पूर्वार्धोपात्ता ये चतुर्दश वर्णास्तदन्ता धातवः उत्तरार्धोपात्तकादिक्रमेण ये

वर्णास्तत्सङ्ख्याका बोध्या इत्यर्थः । अत एव कान्त एकः । चान्ताः षट् । छान्त एकः । जान्ताः पञ्चदशेत्यादि व्याख्यानम् । क इत्येकस्य, च इति षण्णां, ण इति पञ्चदशानां सञ्ज्ञेत्याद्यभ्युपगमात् ॥ पान्तेषु द्वयोः श्नना निर्देशस्य फलमाह । तुदादाविति । तृप्दृपी मतभेदेन तुदादौ स्थितौ । चुरादौ तु तृपिः सर्वमते स्थितः, दृपिस्त्वेकीयमतेनेति विवेकः ॥ अत एव वक्ष्यति । तृप तृम्फ तृप्तौ । द्वावपि द्वितीयान्तावित्यन्ये । दृप दृम्फ उत्क्लेशे । प्रथमः प्रथमान्तः द्वितीयो द्वितीयान्त इत्येके इति च तुदादौ ॥ चुरादौ तु तृप तृप्तौ । तृप दृप संदीपन इत्येके इति च ॥ अन्यनिवृत्तये इति । निवर्तनीयास्तु ञिष्विदा स्नेहनमोचनयोः । पद स्थैर्ये । षिध गत्याम् । षिधू शास्त्रे माङ्गल्ये च । बुधिर् बोधने । इति भौवादिकाः । मनु अवबोधने तानादिकः । पुष पुष्टौ भौवादिकः क्र्यादिकश्च । श्लिष दाहे भौवादिकः । वस आच्छादने आदादिकः, एते अनुदात्तत्वराहित्यात् सेटः । युज् बन्धने क्र्यादिकोऽयमनुदात्त इत्यनिट् । श्नना निर्देशेन संग्राह्यास्तु ञिष्विदा गात्रप्रक्षरणे । पद गतौ । षिधु संराद्धौ । बुध अवगमे । मन ज्ञाने । पुष् पुष्टौ । श्लिष आलिङ्गने । वस निवासे एतेऽनिटः ॥ यु मिश्रणामिश्रणयोः । अयं सेट् ॥ अमी तथेति । णिजिर् शुद्धौ । ओविजी भयचलनयोः । शक मर्षणे । इत्येषां क्रमेण आदादिकतौदादिकदैवादिकानां व्यावृत्तये सानुबन्धा निर्दिष्टा इत्यर्थः ॥ विन्दतिरिति । विद्लृ लाभे ॥ इष्ट इति । अनिट्त्वेनेति शेषः । भाष्यानुक्ता इति । भाष्यकृताऽनुक्ताः न तु प्रत्याख्याता इति नास्तीह तद्विरोधः । ततश्च व्याघ्रभूत्यादिग्रन्थानुरोधात् शुष्क पुष्टौ क्तेन नञ्विशिष्टेनानञ् इत्यादि सौत्रप्रयोगादन्तु' प्रतिपत्तुमित्यादिसार्वलौकिकव्यवहाराच्च उपलक्षणतयैव भाष्यं नेयमिति भावः ॥ अकर्मक इति । अत्र केचित् । अभिभवेच्छा धात्वर्थः । तथा च स्पर्धार्थकस्य सकर्मकता दृश्यते, आह्वास्तमैरावमरावतीयेति । उदाहरिष्यते च स्पर्धायामाङ इत्यत्र स्वयमेव कृष्णश्चाणूरमाह्वयते, स्पर्धत इत्यर्थ इति । श्रीहर्षोपि प्रायुङ्क्त तन्नासत्ययुगान्तं वा त्रेता स्पर्धितुमर्हति इति । अतोस्य सकर्मकत्व न्याय्यमित्याहुः ॥ शपूर्वाः ॥ अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः । तेन शरी न शेषः, किं तु खयामेव । इह स्पर्ध इत्यत्र रेफस्यापि द्वित्व भवति, द्वितीयस्यैकाचः सवन्धिरेफस्यैव न न्द्रा इति निषेधादिति, बोध्यम् ॥ गाधृ । ऋकारो नाग्लोपिशास्वृदिताम् इति निषेधार्थः । अजगाधत् । आस्पद स्थापना अवस्थान वा प्रतिष्ठा । एकत्र स्थापनं, सदर्भो वा ग्रन्थः ॥ नाधृ नाधृ । उपतापो रोगः ॥ अनुदात्तेत्त्वादेव सिद्धे नियमार्थं वार्तिकमित्याह । आशिष्ये-

वेति ॥ अत एकहल्मध्ये ॥ एकशब्दोऽत्रासहायवचनः ॥ एकयोर्हलोर्मध्ये इत्यर्थः । तदाचष्टे असंयुक्तेति । इष्टानुरोधेन । लिटीत्यावर्त्य आदेशविशेषणम्, एत्वस्य निमित्तं च क्रियत इत्याह । लिण्निमित्तेति ॥ किति लिटीति च । यद्यपि गमहन इति सूत्रे कितीति वर्तते । तथापि प्रयोजनाभावात् ङितीत्येतन्नानुवर्तत इति भावः ॥ किति किम् । ननाद ॥ लिटि किम् । पापच्यात् । चकणतुरिति । न चैवमपि बभणतुरित्यत्र अभ्यासे चर्चं इत्यस्यासिद्धत्वादेत्वाभ्याससलोपौ स्त एवेति वाच्यम् । फलभजग्रहणेन एत्वविधिं प्रति तत्सूत्रस्य सिद्धत्वज्ञापनात् । एवं च आदेशस्त्वेह वैरूप्यसंपादक एव गृह्यते इति व्याख्यानमवश्यं कर्तव्यमेवेति दिक् ॥ मदि स्तुति । मोदः संतोषः मदो गर्वः ॥ स्वप्न आलस्यम् ॥ न शसदद ॥ शसु हिंसायाम् दन्त्यातः ॥ सूत्रेऽवयवावयविभावः षष्ठ्यर्थः । तथा च शसददवादीनांयोऽकारः इत्यन्वयसंभवेऽपि अकारस्य गुणरूपत्वाङ्गेदनिबन्धना षष्ठी न सभवतीत्याशङ्क्य तन्निर्वाहार्थं व्याचष्टे । गुणशब्देन भावितस्येति । भावितत्वं च साक्षात् परम्परासाधारणम् । तथा च शशरतुः पपरतुरित्यादौ गुणशब्देन क्रियमाणो योऽर् तदवयवोऽकारः, लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽकार इत्यर्थान्नास्त्यत्रानुपपत्तिः ॥ ददद इति । शशसतुः । शशसुः । ववमतुः । ववमुरित्यादावपि निषेधो बोध्यः ॥ ष्वद स्वर्द । अयमिति । प्रत्येकाभिप्रायेणोक्तमित्याहुः ॥ सकर्मक इति । स्वदस्व हव्यान्यनुभवेत्यर्थः । अकर्मक इति । अपां हि तृप्ताय न वारिधारा, स्वादुः सुगन्धिः स्वदते तुषारा इति श्रीहर्षः । न स्वदते, न रोचते इत्यर्थः ॥ धात्वादेः ॥ धातुग्रहण किम् । षट् षड् । आदेः किम् । लषति ॥ उपधायां च । सिपि धातोः इत्यतः धातोरित्यनुवर्तते । र्वोरुपधाया इत्यतः र्वोरिकः दीर्घः इति । हलि चेत्यतो हलीति च तदाह । धातोरित्यादि ॥ धातोः किम् । ऊडुतः कुरूः । कुर्वौ कुर्व इत्यत्रेको दीर्घो माभूत् । न चात्र रेफस्य प्रातिपदिकोपधात्वेपि पदोपधात्वाभावादेव दीर्घो न भवेदिति धातोरित्यनुवर्तनमिहानावश्यकमिति वाच्यम् । पदस्येत्यनुवृत्तौ तु कूर्दते खूर्दते इत्याद्यसिद्धिप्रसङ्गात् । वस्तुतस्तु पूर्वत्रासिद्धे न स्थानिवदिति स्वीकारात् अचः परस्मिन्निति स्थानिवत्त्वस्य निषेधाभ्युपगमेपि कार्यकालपक्षे असिद्धं बहिरङ्गमिति परिभाषाया प्रवृत्तेर्बहिरङ्गस्य यणोऽसिद्धत्वात् कुर्वौ कुर्व इत्यत्र उपधायां चेति दीर्घो न भवेदिति धातुग्रहणानुवर्तनस्य नात्यन्तावश्यकता पदस्येत्यननुवृत्त्या कूर्दते इत्यादौ दीर्घः सिध्यत्येवेत्याहुः ॥ रेफवकारयोः किम् । पुष्यति ॥ हल्परयोः किम् । चिरिणोति जिरि-

गोति ॥ इकः किम् । अर्च्यते नर्दति । ननु हलि चेत्यत्र रेफवकारयोर्हल्परयोरिको दीर्घः स्यादिति व्याख्यायां कूर्दते गूर्दते इत्यादि सिध्यत्येवेति सूत्रमिदं व्यर्थमिति चेत् । हलि चेत्यत्र धातुग्रहणमनुवर्तनीयमेव । अन्यथा दिवमिच्छति दिव्यतीत्यादावतिप्रसङ्गः स्यात् । तथा च उपधाया चेति सूत्राभावे उपधाभूतयोः र्वोः परतो दीर्घो न स्यात्, किं तु रेफवान्तयोरेव धात्वो र्हलि चेति सूत्रेण स्यादित्येतत्सूत्रमावश्यकमेवेति ॥ सूदति इति ॥ स्रवतीत्यर्थः ॥ ननु स्वर्दतिवत् स्वद सूर्दति दन्त्यादय एव धातवः पठ्यन्ताम् । षोपदेशान् पठित्वा सत्वविधौ गौरवात् । मैवम् । तथाहि सति ण्यन्ताच्चङि असिष्वदत् असूषुददित्यादौ, लिटि सुषूदे सिषेवेत्यादौ चादेशप्रत्यययोरिति षत्वं न स्यात् । इण्. परस्य सकारमात्रस्य षत्वविधौ तु सुपिसौ सुपिस इत्यादावपि स्यादिति धातुपाठे पाणिनिना तालव्यदन्त्यादिपाठवत् षोपदेशा अपि व्यवस्थयैव पठिताः । स च पाठ इदानीं परिभ्रष्टः साधादिषु सादिपाठस्यैव दृश्यमानत्वादतो लक्षणमुखेन तान् व्यवस्थापयति । सेगित्यादि । दन्त्यश्च अच्च दन्त्याचौ, तौ अन्तौ अव्यवहितपरौ यस्य स दन्त्याजन्तः, दन्त्याजन्तश्चासौ सश्च दन्त्याजन्तसः, स आदिर्येषां धातूनां ते दन्त्याजन्तसादयो जन्तसादयश्चैकाचः षोपदेशा बोध्याः । तथा च साधादौ सांप्रतं पठ्यमानः सकार उपदेशे न स्थित इत्यनुमेयमिति भावः ॥ दन्त्येत्यादि किम् । चुस्कन्दे ॥ एकाचः किम् । सोसूच्यते । सोसूत्र्यते । सूचिसूत्री चुरादावदन्तौ ॥ उक्तलक्षणस्यातिव्याप्तिं वारयितुमाह । सेगिति । सेकृ गतौ । स्रकृ गतौ । सृ गतौ । स्तृञ् आच्छादने । सृज विसर्गे । स्तृञ् आच्छादने । स्त्यै शब्दसंघातयोः । एभ्यो न्ये ॥ पूर्वेण केषांचिदसंग्रहादाह । ष्वष्केति । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । स्वद आस्वादने । ष्वञ्जपरिष्वङ्गे । ञिष्वप् शये । ष्मिङ् ईषद्धसने । एते षोपदेशा इत्यन्वयः ॥ स्वाद आस्वादने इत्यादावतिव्याप्तिमाशङ्क्याह । दन्त्यः केवलदन्त्य इति । तथा च असिस्वददित्यादौ षत्वं नेति भावः ॥ ल्हादी सुखे च ॥ चादव्यक्ते शब्दे । ईकारः श्वीदितो निष्ठायमितीण्निषेधार्थः । प्रल्हन्न, प्रल्हन्नवान् । इह ल्हादो निष्ठायामित्युपधाह्रस्वः ॥ श्लाघायामिति । अविद्यमानगुणसंबन्धख्यापनं श्लाघा ॥ आततुर्दति । हल्मध्यस्थत्वाभावादेत्वं न ॥ इट ईटि ॥ संयोगान्तस्य लोप इत्यतो लोप इति रात्सस्येत्यतः सस्येति चानुवर्तते तदाह । लोपः स्यादिति ॥ इटः किम् । अहार्षीत् ॥ ईटि किम् । आतिष्टाम् । आतिषुः ॥ सिज्लोप इति । अत्र वन्दन्ति । सलोप इति वक्तव्ये सिज्ग्रहणं झलो झलीत्यादिसूत्रत्रयं सिज्विषयकमिति ज्ञापनार्थम् । तेनेह न । सोमसुत् ।

स्तोता । द्विष्टराम् । द्विष्टमाम् । धि चेति सूत्रे तु वामनमते सिचो लोपः । भाष्यमते तु सस्येति भेदो बोध्य इति ॥ वदव्रज ॥ अवादीत् । अव्राजीत् । अतो-हलादेरिति विकल्पं बाधित्वा अनेन नित्यं वृद्धिः ॥ हलन्तस्योदाहरणमपाचीत् अधाक्षीदिति। तदन्तविधिनैव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम् । हलो च इत्युक्ते त्वजन्तांगस्य हलः स्थाने वृद्धिरिति कदाचिदाशंकेत । अच इति तु इक्-परिभाषाया अनुपस्थानार्थम्। अन्यथा अभैत्सीदित्यत्र स्यात् न त्वपाक्षीदित्यादौ॥ नेटि ॥ प्रागुक्ता नेति। हलन्तत्वादेव सिद्धे वदव्रजोर्विशिष्य विधानान्न निषेधः। किं तु हलन्तलक्षणाया एव वृद्धेर्निषेधः । तस्यानिडादौ सिचि चरितार्थत्वात्। अमुमेवार्थं मनसि निधाय क्वचित् पुस्तकेषु हलन्तलक्षणा वृद्धिर्नेत्येव पठ्यते ॥ इर इत्संज्ञेति । इकारस्योपदेशेजनुनासिक इति, रेफस्य तु हलन्त्यमिति प्रत्येकमित्सञ्ज्ञायामिदित इति नुम् स्यादिति भावः ॥ एतस्य वैयर्थ्यं चक्षिङ्व्याख्यायां वाचोत्यत्र स्फुटीभविष्यति ॥ चुश्च्युतेति । शर्पूर्वाः खयः ॥ यकाररहितोप्ययमिति । तथा च प्रयुज्यते मधुश्चुतं घृतमिव सुपूतमिति ॥ मन्थ। अयं क्र्यादावपि॥ षिध गत्याम्। अयमुदिदिति केचित्। तत्तु, सिद्धगतिबुद्धगत्योः श्यना निर्देशात् सिधितं बुधितमिति वृत्तिग्रन्थविरुद्धम्। उदित्त्वे तु उदितोवेति क्त्वायामिड्विकल्पान्निष्ठायामिड्न स्यात्, यस्य विभाषेति निषेधात् ॥ सिषेधेति। आदेशेति षत्वम्॥ उपसर्गात्॥ सुनोति सुवतीत्यादिश्तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः। तेन अभिसोषवीति, अभिसोषोतीत्यादौ षत्वं नेति प्राञ्चः । स्थादिष्वेवाभ्यासस्य षत्वं, न तु सुनोत्यादिष्विति नियमान्नेह षत्वप्राप्तिरिति व्यर्थः प्रतिषेध इति मनोरमादौ स्थितम् ॥ सेनयेति णिजन्तो नामधातुः, सेनया अभियाति अभिषेणयति। सेधेति शपा निर्देशाद्भौवादिकस्य ग्रहणम्, न तु सिध्यतेः। परिसिध्यति ॥ गृहा दारा इत्यत्रेव तात्स्थ्यात्ताच्छब्द्यमित्याह। उपसर्गस्थादिति। निमित्तादिति । इण्कुपात्। कवर्गस्तु नेह संबध्यते। असम्भवात्। न च निःषुणोति निषेधति निःषिञ्चतीत्यादौ व्यवधानेन इणः परत्वाभावाद् सस्य षत्वं न स्यादिति शङ्क्यम्। षत्वविधौ नुम्विसर्जनीयशर्व्यवायेपीत्यधिकारात्। इस्सन्तादुपसर्गादिति व्याख्याने तु, स्यादेवाव्याप्तिः । दुरः षत्वणत्वयोरित्युपसर्गत्वप्रतिषेधात् दुःसुनोति दुःसेधतीत्यादौ तु षत्वेन न भवितव्यमिति दिक्। मूर्द्धन्यादेशे फलितमाह। सस्य षः स्यादिति ॥ स्थादिषु ॥ प्राक्सितादित्यत्र क्रमज्ञानस्यापेक्षितत्वात्तेनैव क्रमेण षत्वसूत्राणि व्याचष्टे। सदिरप्रतेः ॥ अप्रतेः किम्। प्रतिसीदति। षष्ठ्यर्थे प्रथमेत्याह सदेरिति ॥ स्तन्भेः ॥ सौत्रस्येति। स्तन्भु स्तुन्भिति

सूत्रे निर्दिष्टस्य रोधनार्थस्य, न तु ष्टभि प्रतिबन्धे इत्यस्येति भावः। एवं जृस्तम्भि-त्यङ्विधायकसूत्रेऽपि सौत्रस्यैव ग्रहणमिति बोध्यम्। एतच्च लक्षणप्रतिपदोक्तप-रिभाषया लभ्यते। सौत्रो हि धातुर्नकारोपध इति प्रतिपदोक्तः। इदित्त्वान्नुमि ष्टभिर्लाक्षणिकः। तेन विस्तम्भते इत्यादौ षत्वं न। उदः स्थास्तम्भोरिति सूत्रे मकारोपधग्रहणेन उभयोरपि ग्रहणादुत्तम्भते इति द्वयोरपि रूपं तुल्यम्। मका-रस्योभयत्रापि लाक्षणिकत्वात्। उत्तरार्थं इति। उत्तरसूत्रे स्तम्भेरेवानुवृत्त्यर्थं इति भावः॥ ननु सदिस्तम्भ्योरिति सूत्रितेऽपि एकदेशे स्वरितत्वप्रतिज्ञानात् क-थंचिदनुवृत्तिर्भविष्यतीत्यत आह। किं चेति। नानुवर्तेत इति। तथा च स्तम्भे-रित्यत्राऽननुवृत्तये योगविभाग आवश्यक इति भावः॥ अवाच्चा॥ चकारस्त्विन्द्य-प्रयोजन इत्याहु.। आलम्बनमाश्रयणम्। यथा यष्टिमवष्टभ्य आस्ते। तामाश्रित्य तिष्ठतीत्यर्थः॥ आविदूर्यं सामीप्यम्। तच्च प्रयोगोपाधिः। अवष्टब्धा गौः। नि-रुद्धा सती समीपे आस्ते इत्यर्थः॥ एतयो किम्। अवस्तब्धो वृषलः शीतेन॥ केचिदिह अविदूरशब्दात् स्वार्थे ष्यञ्। आविदूर्यमनतिदूरमीषद्दूरमित्यर्थः। तथा च अविदूरशब्दात् नञ्पूर्वात्तत्पुरुषादिति निषेधे प्राप्ते अत एव निपातनाद्भाव-प्रत्यय इति मनोरमाग्रन्थोक्तिर्नातीवोपयुज्यत इत्याहुः॥ वेश्च॥ विष्वणति। स-शब्दं भुङ्क्ते इत्यर्थः। अट्कुप्वाङिति णत्वम्। एवमवष्वणति। व्यष्वणत्। विषष्वाण। स्थादिष्वभ्यासेनेति षत्वम्॥ भोजने किम्। विस्वनति वीणा॥ परिनिविभ्यः॥ सेवेत्यत्र अकार उच्चारणार्थः। न च यङ्लुग्निवृत्तये शपा निर्दे-श एवास्त्विति शङ्क्यम्। वकारान्तानामूठ्भाविनां यङ्लुग्नास्तीति वक्ष्यमा-णत्वात्। षेवृ सेवायाम्। परिषेवते॥ षिञ् बन्धने क्तान्तः सितशब्दः एरजन्तः पचाद्यजन्तो वा सयशब्दः, विषितः। विषयः॥ प्रत्ययविशिष्टग्रहणं किम्। वि-सिनोति॥ षिवु तन्तुसंताने। परिषीव्यति॥ षह मर्षणे। परिषहते॥ सुडागमः परिष्करोति। स्तुस्वञ्जोरुपसर्गात्सुनोतीत्येव सिद्धे परिनिविभ्यः परयोरेतयोः सिवादीनां वाड्व्यवायेपीति विकल्पार्थं पुनर्वचनम्॥ प्राक् सितात्॥ उपस-र्गात्सुनोतीत्यादिना विहितं षत्वमड्व्यवाय एवेति भ्रमनिवारणार्थमपिशब्द-स्योपादानम्॥ तेषामिति। पञ्चदशानामित्यर्थः॥ अभ्यषुणोदित्यादीन्युदाहर्त-व्यानि॥ स्थादिषु॥ इह द्वे वाक्ये आद्यं षत्वविध्यर्थम् द्वितीयं तु नियमार्थमित्या-शयेनाह। व्यवायेऽपि षत्वमेषामेव चेति। स्थादीनां दशानामेवाभ्यासस्य षत्व-मित्यर्थः॥ तत्फल तु षू प्रेरणे अभिसुसूषति। अत्रोक्तनियमादभ्याससकारस्य न षत्वम् द्वितीयस्य तु स्तौतिण्योरिति नियमान्न भवति। अभिसिषासतीत्यत्र

तु षणोऽभावादभ्यासात् परस्य षत्वम् पूर्वस्य तु उक्तनियमान्नेति बोध्यम् ॥ स्यादेतत् । निषिषेधेत्यादौ अभ्यासस्य उपसर्गात्सुनोतीत्यनेन सिद्धम्, अभ्यासात् परस्य तु आदेशप्रत्ययोरित्यनेनेति किमाद्यवाक्येन ॥ अत्राहुः । फलत्रयार्थमाद्यं वाक्यम् । अषोपदेशार्थम् । तथाहि । सेनया अभियातुमिच्छति अभिषिषेणयिषति । अवर्णान्ताभ्यासार्थं च । अधीसन गोत्रभिदोऽधितष्ठौ । षणि प्रतिप्रसवार्थं च । अभिषिषिक्षति । षिच चरणे स्तौतिण्योरेवेति नियमात् षभूते सनि निवर्तितमपि सत्वमुपसर्गमाश्रित्य अत्र भवतीति ॥ सेधतेर्गतौ ॥ श्तिपा निर्देशाद्गत्यर्थादस्माद्यङ्लुकि न निषेध. । तेन उपसर्गमाश्रित्य षत्वं भवत्येव । विषेषिधीति । नच सेधेति शपा निर्देशाद्यङ्लुकि उपसर्गात्सुनोतीति षत्वं न भवेदिति शङ्क्यम् । दैवादिकनिवृत्त्यर्थतया शपा निर्देशस्य चारितार्थ्यात् । अन्यथा सेधतेरिति श्तिपादिनिर्देशस्य वैयर्थ्यापत्तेरिति दिक् ॥ षिधू शास्त्रे । माङ्गल्य मङ्गलक्रिया । स्वार्थे ष्यञ् ॥ स्वरतिसूति ॥ स्व शब्दोपतापयो. भ्वादिः ॥ ननु स्वरतिसूधूदितो वेति सूत्र्यतां किमनेन सूतिसूयत्योः पृथग्ग्रहणेन ॥ मैवम् । तथाहि सति निरनुबन्धकपरिभाषया षू प्रेरणे इति तौदादिकस्यैव ग्रहण स्यान्न त्वादादिकदैवादिकयोरेतयोः । नचैव षूङ् इति पठ्यतामिति वाच्यम् । लुग्विकरणाऽलुग्विकरणयोरिति परिभाषया अलुग्विकरणस्य सूयतेरेव ग्रहणप्रसङ्गात् । अस्याश्च परिभाषायाः सूतिसूयत्योः पृथग्ग्रहणमेव ज्ञापकमित्याहुः ॥ धूञ् कम्पने स्वादिः क्र्यादिश्च । सानुबन्धनिर्देशो धू विधूनने इत्यस्य निवृत्त्यर्थः । इट् सनि वेत्यतो वेति वर्तमाने पुनर्वाग्रहणं लिङ्सिचोर्विकल्पनिवृत्त्यर्थम् ॥ झषस्तथोः ॥ अध इति किम् । धत्तः ॥ असैत्सीदिति । अस्तिसिच इति ईडागमः । वदव्रजेति वृद्धिः । ततश्चर्त्वम् ॥ झलो झलि ॥ संयोगान्तस्येत्यतो लोप इति रात्सस्येत्यतः सस्येति चानुवर्तते तदाह । सस्य लोपः स्यादिति । पदस्येत्यधिकारात् प्रत्यासत्तेर्झलो झलि सस्येति निर्दिष्टानां त्रयाणामेकपदसम्बन्धित्वे लोपोयम् । तेन सोमसुत् स्थानमित्यत्र न भवति ॥ झलः किम् । अनैष्टाम् ॥ झलि किम् । असैत्सीत् ॥ असेधीदिति । नेटीति वृद्धिप्रतिषेधः । गुणः ॥ खाद्द । ऋकार इदिति । तेन नाग्लोपीति निषेधे न चखादत् । अतउप ॥ अतः किम् । तुतोद ॥ उपधायाः किम् । गणयति । इह अतो लोपं बाधित्वा परत्वाद् वृद्धिः स्यात् । अतो हलादेः ॥ इह क्ङिति वृद्धिरिति सूत्रमनुवर्तते नेटीति सूत्रादिटि इति ऊर्णोतेर्विभाषा इत्यतो विभाषाग्रहण च, तदाह । इडादावित्यादि ॥ अतः किम् । अदेवीत् ॥ हलादेः

किम्। माभवानतीत्। अटीत्॥ लघोः किम् अगदीत्। अरचीत्॥ इडादौ किम् अपाचीत्॥ परस्मैपदे किम्। अयतिष्ट अयतिषाताम्॥ अचकासीदित्यत्र चकारादकारस्य वृद्धिवारणाय येन नाव्यवधानमिति न्यायेन यद्येकवर्णव्यवधानमेवाश्रीयते तदा त्वरचीदित्यत्रापि प्रसक्त्यभावात् लघोरिति शक्यमकर्तुमित्याहुः॥ तपरकरणं स्पष्टार्थम्॥ पवर्गीयादिरिति। दन्त्योष्ठ्यादित्वे तु नशसददवादिगुणानामित्वाभ्यासलोपनिषेधाद् वेदतुः वेदिथेत्यादि न सिध्येदिति भावः॥ नेर्गदनद॥ गदादीनां चतुर्णां शपा निर्देशः स्यत्यादीनामेकादशानां श्तिपा निर्देशश्च यङ्लुङ्निवृत्त्यर्थः। तेन प्रनिजागदीति प्रनिनानदीति प्रनिसासेति प्रनिजधनीतीत्यादौ णत्वं न। घुशब्देन घुसंज्ञका दाधादयः षट् गृह्यन्ते। डुदाञ् प्रणिददाति। दाण्। प्रणियच्छति। दो प्रणिद्यति। देङ् प्रणिदयते। धेट् प्रणिधयति। डुधाञ् प्रणिदधाति॥ माशब्देन मेङ्माङोरेव ग्रहणं घुप्रकृतिमाङिति पठित्वा भाष्यादौ तथा व्याख्यानात्॥ णो नः॥ धातोरिति। धात्वादेः षः स इत्यतोऽनुवर्तनाद्धात्वादेरित्येव। नेह। अणति॥ णोपदेशान् पर्युदासमुखेनाह। णोपदेशास्त्विति। नर्द शब्दे। नट अवस्यन्दने चुरादिः। यस्तु नट नृत्तौ इति घटादिः स नेह गृह्यते नाटीति दीर्घनिर्देशात्॥ नाथृ नाधृ याच्ञादौ टुनदि समृद्धौ। नक्ष नाशने। नॄ नये। नृती गात्रविक्षेपे। एभ्योऽष्टभ्यो भिन्ना इत्यर्थः॥ तवर्गेति। तेषां तु पञ्चभ्योभिन्ना णोपदेशाः॥ उपसर्गाद॥ समासेऽनञ्पूर्वे क्त्वो ल्यप् इत्यतोऽनुवर्तनात्समास एव स्यादित्यसमासग्रहणम्। कृते तु तस्मिन्नसमास एव स्यादित्यपेर्ग्रहणं कृतम्॥ प्रणिनदतीति। नेर्गद इति णत्वम्। धातुनकारस्य तु उपसर्गादसमासे इति णत्वं न भवति अडादिभिन्नेन व्यवधानात्॥ तस्मात्तच्छब्देन कृतदीर्घाकारः परामृश्यत इत्याह। दीर्घीभूतादिति॥ खर्द। दन्दशूकस्य सर्पत्वात्तद्वाचित्वे धातुत्वं न संगच्छत इत्यत आह। दन्दशूकक्रियायामिति। दन्दशूककर्तृकायामित्यर्थः। आनन्देति। इदित्त्वान्नुम् तस्मान्नुड्द्विहल इति नुट्॥ वदनैकदेश इति। तत्क्रियायामित्यर्थः॥ आदिर्ञिटुडवः॥ उपदेशेऽजनुनासिक इत्यतोऽनुवर्तनादाह। उपदेशे इति॥ उपदेशे किम्। ञिकारीयति॥ ञिष्वप् जीतः क्तः। सुप्तः। ट्वितोऽथुच् नन्दथुः। ड्वितः क्त्रिः। कृत्रिमम्॥ क्लिदि परिदेवने अनुदात्तेत्सु पठितस्येह पाठः परस्मैपदार्थः। क्रियाफलस्य कर्तृगामित्वेपि परस्मैपदार्थं स्वरितेत्सु अयं न पठितः। शुन्ध शुद्धौ। अयं शौचकर्मणि युजादौ। माङ्गलिक एधतिस्तवर्गीयान्तस्तदनुरोधेन कतिचित् तवर्गीयान्ताः पठिताः॥ इदानीं लोकप्रसिद्धकादिपाठक्रमेणाह। अथेत्यादि॥

चुकुके इति। परमपि गुणं बाधित्वा नित्यत्वात् असंयोगात् इति कित्त्वम्॥ सु-भ्वात्वित्यादि। सुभ्धातोरुदाहरणानि। षट् दन्ता अस्य षोडन् तमाचष्टे णिचि टिलोपः। षोडयति। एवं षण्ढं करोत्याचष्टे वा षण्ढयति। षण्ढीयतीत्यत्र षण्ढ-शब्दात् क्यचि ईत्वं बोध्यम्॥ एतच्च वार्तिक भाष्ये प्रत्याख्यातम्। तथाहि। धात्वादेः इति सूत्रे उपदेशे इति वर्तते। न च सुभ्धातूनामुपदेशोऽस्ति। ष्ठिवुष्व-ष्कती तु यकारादी। लोपो व्योः इति यलोपः॥ प्रनिकषतीति। शेषे विभाषा इत्यत्र अकखादाविति पर्युदासान्नेणत्वं नेति भावः॥ असवर्णेचीति॥ असवर्णे किम्। ऊखतुः॥ अचि किम्। इयाज। उवाय॥ उवोखेति। द्विर्वचनेचि इति निषेधात् पूर्वं द्वित्वं पश्चादुकारस्य लघूपधगुणे कृते अभ्यासस्योवङ्। एवमियेषे-त्यत्रेयङ्। असवर्णग्रहणसामर्थ्यादियङादौ कर्तव्ये गुणोत न स्थानिवदिति बो-ध्यम्। संनिपातपरिभाषयेति। आमि सति लिट्परत्वं धातोर्न सिध्येदिति भा-वः॥ अन्ये तु इजादेः इति सूत्रे गुरुमानिति नित्ययोगे मतुप् ततश्च नित्यं यो गु-रुमान् एध वृद्धौ इत्यादिस्तत्रैव स्यादिति नात्र आमः प्रसक्तिरित्याहुः॥ ऊखतु-रिति॥ कित्त्वाद् गुणाभावे अभ्यासस्यासवर्णे इति उवङ् न भवति॥ ननु इयेष उवोषेत्यत्रापि अन्तरङ्गत्वात् सवर्णदीर्घे कृतेच्परत्वाभावादियङुवङौ न स्त इति इष्टरूपासिद्धेः किं तत्रासवर्णग्रहणेनेति चेद्॥ अत्राहुः। वार्णादाङ्ग बलीय इति परिभाषाज्ञापनार्थमेवासवर्णग्रहणं कृतम्। तेन भवतीत्यत्रान्तरङ्गमपि यणं बाधित्वा गुणो भवति। तथा करोतेर्णलि कार इत्यत्र यणं बाधित्वा वृद्धिर्भवति। न चैवं मिवेरौणादिके नप्रत्यये स्योन इत्यत्र च्छ्वोः शूड् इत्यूठि कृते लघूपगुणं बाधित्वा यण् न स्याद् इति वाच्यम्। समाना-श्रय एव वार्णादाङ्गस्य बलीयस्त्वात्। इह तु निमित्तभेदेन व्याश्रयत्वमिति॥ अभ्यासग्रहणेनेति। पूर्वस्यान्तवत्त्वे नेत्यर्थः॥ पर्जन्यवल्लक्षणेति। उपयोगानुपयो-गविचारेण प्रवर्तमानं शास्त्रं कृत्स्नं प्रवर्तयतीत्यर्थः। तथा चैकस्मिन् लक्ष्ये लक्षणं सकृदेव प्रवर्तत इति न तस्य पुनः प्रवृत्तिरिति भावः॥ आङ्गं बलीय इति। ननु ह्रस्वसवर्णदीर्घयोर्निमित्तभेदात् समानाश्रयत्वाभावे कथमाङ्गस्य बलीयस्त्वमिति चेत्॥ सत्यम्। इष्टानुरोधेन स्थानिनमादाय क्वचित् समानाश्रयत्वाभ्युपगमात्। अत एव उङ् शब्दे इत्यस्माल्लिटि ऊवे ऊवाते इत्यादीष्टं सिध्यति। उवङः प्राक् सवर्णदीर्घप्रवृत्तौ तन्न सिध्येदिति दिक्॥ परत्वाच्चेति। आपाततोयं हेतुः ह्रस्वस्या-ङ्गत्वेन बहिरङ्गत्वादन्तरङ्गसवर्णदीर्घं प्रति परत्वोपन्यासस्यायुक्तत्वात्॥ उंखती-ति। इदित्त्वान्नुम्। लिटि उङ्खांचकार। आशिषि उङ्ख्यात्॥ ववखतुरिति।

कित्त्वेन नियमस्य मुख्यत्वादिति ॥ अचस्तात् ॥ उत्तरसूत्रात् उपदेशे इत्यपकृष्यते तच्चाजन्तस्य विशेषणमित्याह । उपदेशेऽजन्त इति । धातुरित्याक्षेपाल्लभ्यते न ह्यधातोस्थल् संभवति । नित्यग्रहणमनिटो विशेषणम् । क्व च नित्यमनिडित्यपेक्षायां सन्निधानात्तासावेवेति विज्ञायते तासि च क्लृपः इति सन्निहितं वानुवर्तते । न वृद्भ्यः इत्यस्मान्नेत्यनुवर्तते, तदाह । तासौ नित्यानिट् ततः परस्येति । तासाविव तास्वदिति सप्तम्यन्ताद्वतिः, यथा तासौ न भवति एवं थल्यपीत्यर्थः ॥ अच इति किम् । बिभेदिथ । रुरोधिथ ॥ उपदेशे इति किम् । जहर्थ । इह परत्वान्नित्यत्वाच्च गुणे रपरत्वे च कृते अजन्तत्वाभावादेतस्याप्रवृत्ताविट् प्रसज्येतेत्युपदेश इत्युक्तम् ॥ थलीति किम् । पपिम ॥ नित्यमनिटः किम् । सस्वरिथ । सस्वर्थ । नायं तासौ नित्यमनिट् स्वरतिसूति इति विकल्पितेट्त्वात् । इह तासीति न इति चानुवृत्तेरवेष्टे सिद्धे तास्वत् इत्येतन्नातीवोपयुज्यत इति केचित् ॥ अन्ये तु यस्य तासौ विद्यमानत्वं तस्मादेव परस्य थल इण्निषेधः इत्येतल्लाभार्थं तत् । तेन ऊवयिथ । जवसिथेऽयत्र न निषेध इत्याहु. ॥ उपदेशेत्वतः ॥ पपक्थ । इयष्ठ ॥ उपदेशे किम् । कर्ष्टा । चकर्षिथ ॥ अकारवत इति किम् । भेत्ता । बिभेदिथ ॥ तपरकरणं किम् । राद्धा । रराधिथ ॥ तासौ किम् । जिघृक्षति । जग्रहिथ । सनि ग्रहगुहोश्च इति सनि नित्यमनिट् । क्रान्तः । चक्रमिथ । उदित्त्वेन क्त्वायां वेट्त्वाद् यस्य विभाषा इति निष्ठायां नेट् ॥ नित्यानिटः किम् । अक्ता । अञ्जिता । किं च नित्यग्रहणानुवर्तनाच्चक्रमिथेत्यपि सिध्यति । न हि क्रमिस्तासौ नित्यानिट् स्नुक्रमोरनात्मनेपदनिमित्ते इति परस्मैपदे सेट्कत्वात् ॥ ऋतो भारद्वाजस्य ॥ तपरकरणात् कॄप्रभृतिषु दीर्घान्तेषु नायं निषेधः प्रवर्तते । ह्रस्वान्तेषु हृञ्धृञादिषु अचस्तास्वदित्येव सिद्धम् । वृञ्वृङौ यद्यपि सेटौ तथापि वृङः थलेव नास्ति आत्मनेपदित्वात् । वृञस्तु छन्दसि ववर्थेति निपातनाद्ववरिथेति भाषायामिटा भाव्यम्, तस्मान्नियमोयमित्याह । ऋदन्तादेवेति । जहर्थ । दधर्थ ॥ अन्यस्य स्यादेवेति ॥ एवं च भारद्वाजमते स्यात् । अन्यमते न स्यादिति विकल्पः फलितः ॥ पपिथ । पपाथ । पेचिथ । पपक्थ । इयजिथ । इयष्ठ ॥ अकारवानिति । ह्रस्वाकारवानित्यर्थः ॥ ईडगिति । यस्तास्वनिट् स ऋदन्तः थलि नित्यानिट् भवतीत्यर्थः ॥ ननु स्तुद्रुस्रुश्रुवामपि थलि भारद्वाजनियमादिट् स्यात् । न चैव क्रादिसूत्रे तेषां पठनं निरर्थकं स्यादिति वाच्यम् । तत्पठनस्य वमादिष्वनिवृत्त्यर्थतया सफलत्वात् । अन्यथा क्रादिनियमात्तत्र इडागमो दुर्वारः स्यादित्याशङ्क्याह । न चेति ॥ योगद्वयेति । क्रादियोगप्रापितस्य तु न निवर्तक इति भावः ॥ कुत इत्याशङ्कायामाह ।

अनन्तरस्येति । न चैवम् उपदेशेऽत्वत इत्यस्यैव बाधः स्यादिति वाच्यम् । अत्वत्सु धातुषु ऋदन्तत्वादर्शनेन यद्यत्वतः थलि इण्निषेधः, तर्हि ऋदन्तादेवेति नियन्तुमशक्यत्वात् ॥ ननु तर्हि अचस्तास्वत् इत्यस्यैव बाधोऽस्तु तत् कथं योगद्वयप्रापितस्य इत्युक्तम् ॥ अत्राहुः उपदेशेचस्तास्वदित्येव सूत्रे सतेपि तास्वत्यलीत्यादिपदानामिवोपदेशपदस्याप्यनुवृत्तिः भवे अत्वत इति सूत्रे उपदेशपदस्य, अचः इति पूर्वसूत्रे तु तास्वत्यलीत्यादेशाकरणादुभयोः समानयोगक्षेम इति ज्ञायते । तस्मादिष्टानुरोधाच्च योगद्वयमपि भारद्वाजनियमेन बाध्यते । यदि तु उपदेशेऽत्वतः अतोऽचस्तास्वत्यल्यनिटो नित्यम् इति एको योगः स्वीक्रियते, तदा अत्र नास्त्येव शङ्कालेशोपीति बोध्यमिति ॥ अन्ये तु व्याचक्षते अचस्तास्वत् इति सूत्रान्तरमेव ऋतो भारद्वाजस्य इति पठनीयं द्वयोरनन्तरमस्यारम्भादिह तास्वत्यल्यनिटो नित्यं तासीत्यनुवर्त्य योऽयं तासि नित्यानिटस्थलि इति निषेधः, स भारद्वाजमते ऋकारान्तस्यैव इति व्याख्यायते । तेन सर्वेष्टसिद्धिः । यद्वा क्रादिसूत्रे स्तुप्रभृतीनां ग्रहणमेवेड्द्वयस्यापि बाधकमस्तु । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात् । अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बध्येतेत्येतदर्थो हि स आरंभः । अमुमेवार्थं सिद्धवत्कृत्य ततश्चतुर्णां थलि भारद्वाजनियमप्रापितस्य वमादिषु क्रादिनियमप्रापितस्य चेटो निषेधार्थम् इति मूलेप्युपनिबद्धमिति ॥ विव्यिव विव्यिमेति । क्रादिनियमान्नित्यमिट् ॥ सिचि वृद्धिः ॥ इको गुणवृद्धी इति परिभाषोपस्थानादाह । इगन्तेति ॥ परस्मैपदेष्विति किम् । अचविष्ट । अचोष्ट । सिचि किम् । एति । बिभर्ति । गुणं बाधित्वा वृद्धिः स्यात् ॥ खज मन्थे । कजेति केचित्पठन्ति ॥ एजृ कम्पने । दीप्तौ त्वात्मनेपदी गतः ॥ टुओस्फूर्जा । ट्वितोऽथुच् । स्फूर्जथुः । ओदितश्च इति निष्ठानत्वार्थमोकारः । स्फूर्णः स्फूर्णवान् । आकारस्तु आदितश्च इति निष्ठायामिटो निषेधार्थो विभाषा भावादिकर्मणोः इति विकल्पार्थश्च ॥ स्फूर्णम् । स्फूर्जितमनेनेत्यादि । उपधायां च इति दीर्घस्यानित्यत्वज्ञापनार्थमिह दीर्घोपदेशः तेन स्फुर्जति सुर्छति इत्यपि भवतीति केचित् ॥ क्षि क्षये । अजन्तेष्वस्य पाठो युक्तः । क्षि निवासगत्योः इति तुदादौ ॥ अकृत्सार्व ॥ दीर्घग्रहणेन अचश्च इति परिभाषोपस्थानादाह । अजन्तेति । यादौ प्रत्यय इति । अयङ् यि क्ङिति इत्यतो यीत्यनुवर्त्य अङ्गाच्चिप्तप्रत्ययस्तेन विशिष्यते । विशेषणेन तदादिविधिः यस्मिन्विधिरिति परिभाषोपस्थानादिति भावः ॥ न ल्यिति । क्वचाकारे । प्रकृत्य । प्रहृत्य । उच्चैःकृत्य । तुकं बाधित्वा परत्वाद् दीर्घः स्यात् । तुग्विधिः सोमसुद इत्यादौ चरितार्थः । ल्यपः पित्त्वमपि अनुदात्तार्थ-

तया चरितार्थमित्याहुः ॥ सार्वधातुकयकारे तु चिनुयात् कूजिनेति । अर्थैक्या-देकत्र पाठ उचित इति भावः ॥ लज लजि । लज्यात् । लञ्ज्यात् । लज प्रकाशने इति कथादौ ॥ भर्त्सने चेति । चाद् भर्जने ॥ तुजि पालने । भाषार्थोयं युजादौ ॥ गज गजि । गञ्जा तु मदिरागृहम् ॥ गज मदने च । मदनं मदः चित्तविकारः ॥ वज व्रज । वादित्वादेत्वाभ्यासलोपौ न । ववजतुः । वव्रजतुः । शाडग्रन्था इति । शाडृ श्ला-घायाम् इत्यन्ता इत्यर्थः ॥ टोपधोयमिति । तथा च चर्त्वे ष्टुत्वशास्त्रस्यासिद्धत्वा-त् न न्द्राः इति द्वित्वनिषेधेन दकारं विहाय टिशब्दस्य द्वित्वे पश्चाद् दकारस्य ष्टुत्वे च अट्टिटिषते आट्टिटदित्यादि सिध्यति । टोपधत्वे तु अटिट्टिषते । आटिट्ट-दिति स्यादिति भावः ॥ तोपध इति । अस्मिंस्तु पक्षे अतिट्टदित्यादि बोध्यम् । हलादिः शेषेण टकारनिवृत्तौ तन्निमित्तस्यापि ष्टुत्वस्य निवृत्तत्वादिति नव्याः ॥ मनोरमायां तु पूर्वत्रासिद्धीयमद्विर्वचने इति ष्टुत्वस्यासिद्धत्वाभावाट्टकारद्वयस-हितस्य द्वित्वे हलादिः शेषे अटिट्टिषते आटिट्टदित्यादि सिध्यतीत्युक्तम् ॥ निमि-त्तापाये नैमित्तिकस्याप्यपायः इति त्वनित्यमिति तदाशयः ॥ आनट्टे इति । न न्द्राः इति निषेधो न । तत्र द्वितीयस्येत्यनुवर्तनाद् द्वितीयैकाच एव नदराणां निषे-धात् ॥ घट्ट चलने । अयं चुरादावपि ॥ स्फुट । अयं कुटादावपि ॥ आनण्टे इति । तस्मान्नुड् द्विहलः इति नुट् ॥ वञ्चत इति ॥ सहायं विना चरतीत्यर्थः ॥ मडि च । पृथक्पाठादयं वेष्टनेपीत्याहुः । मडि भूषायाम् इत्यग्रे परस्मैपदिषु । यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् इत्यमरः ॥ शडि । शण्डोऽसुरपुरोहि-तः । द्राडृ । विशरणमवयवविभागः ॥ शाडृ । डलयोरैक्यात् शालते इति काश्यपः ॥ शौटृ गर्वे । अस्योणादिषु ईरन्वक्ष्यते । तदेतदतिशौटीर्यमौडुलोमेर्न मृष्यति इति कल्पतरुः । कटे ॥ ह्म्यन्तक्षण । अग्रहीत् । टुवम् । अवमीत् । ह्य गतौ । अह्-यीत् ॥ क्षणु हिंसायाम् । अक्षणीत् ॥ श्वस प्राणने । अश्वसीत् ॥ जागृ निद्राक्षये । अजागरीत् ॥ ण्यन्ते छन्दसि नोनयतिध्वनयति इत्यादिना चङि निषिद्धे औन-यीदिति उदाहरणम् । टुओश्वि अश्वयीत् ॥ इडादौ सिचीति ॥ इडादौ किम् । दह भस्मीकरणे । अधाक्षीत् ॥ किट खिट । इट किट इति किटिर्गतौ पठिष्यते । इह पाठस्त्वर्थभेदात् ॥ जट झट । जेटतुः जझटतुः । इह त्वादेशादित्वादेत्वाभ्या-सलोपौ न । खट । अशूप्रुषिलटिखटिकणि विशिभ्यः क्वन् खट्वा ॥ णट नृत्तौ । प्रणटति । वोपदेशपर्युदासे नाटीति सत्रविकनिर्देशेन नट अवस्यन्दने इति चौरा-दिकस्यैव ग्रहणादयं णोपदेश एव । हट दीप्तौ । हाटकं सुवर्णम् । संज्ञायां चेति ण्वुल् । बाहुलकादस्त्रियामपि ॥ षट । पचाद्यजन्तात् टाप् सटा जटाकेसरयोः ॥

चिट । सर्वधातुभ्यः इति औणादिक इन् । चेटिः कृदिकारात् इति ङीष् । चेटी । विट । इगुपधलक्षणः कः । विटः । इयायेति । द्वित्वे कृते णलि वृद्धौ सत्यामायादेशः । अभ्यासस्यासवर्णे इति इयङ् ॥ ईयतुरिति । द्वित्वे कृते एरनेकाच इति यणं बाधित्वा अन्तरङ्गत्वात्सवर्णदीर्घः । ततः अचि श्नुधातु इतीयङ् । एकादेशस्य पूर्वान्तत्वेन अभ्यासग्रहणेन ग्रहणात् अभ्यासस्यासवर्णे इत्यनेनेत्येके । केचित्तु वार्णादाङ्गं बलीयः इति दीर्घं बाधित्वा यण् । न चेह समानाश्रयत्वं नेति वाच्यम् । अभ्यासोत्तरस्येकारस्य सवर्णदीर्घयणौ प्रति स्थानित्वेन तयोः समानाश्रयत्वात् । अत एव ईयतुरित्यत्र इणो यण् इति यणि ततो दीर्घं इणः किति इत्यभ्यासदीर्घो विधीयते । अन्यथा सूत्रमिदं निर्विषयं स्याद् अभ्यासाभावादित्याहुः ॥ स्यादेतत् । णल्थलोस्त्वभ्यासस्येयङ् दुर्लभः । तस्मिन्कर्तव्ये अचः परस्मिन् इति वृद्धिगुणयोः स्थानिवद्भावेन असवर्णे इति प्रतिषेधादिति चेत् ॥ मैवम् । असवर्णग्रहणसामर्थ्यादेव स्थानिवत्त्वस्याप्रवृत्तेः । ननु नास्ति सामर्थ्यम् इयर्ति इयृत इत्यादौ सावकाशत्वादिति चेद् ॥ अत्राहुः । न ह्येकमुदाहरणं योगारम्भं प्रयोजयति । अन्यथा हि अभ्यासस्यर्तौ इति ब्रूयात् ॥ एवं चान्तरङ्गत्वात्सवर्णदीर्घे कृते ततो वृद्धिगुणयोः सतोः णलि आय थलि एथ । इट्पक्षे तु अयियेति स्यादित्याशङ्कापि न कार्या । अभ्यासस्यासवर्णे इत्यस्य वैयर्थ्यापत्तेरिति ॥ एता । एष्यति अकृत्सार्व इति दीर्घः । ईयात् । ऐषीत् ॥ कुडि । वैकल्यमविवेकः । तुडृ । तोडनं दारणं हिंसनं च ॥ वोडृ लोडृ । उन्मादश्चित्तविभ्रमः ॥ गडि वदनैकदेशे । टवर्गीयप्रकरणादिह पाठस्तु उचितः । अन्तत्यादिषु तु पक्षे ते न तिङ्विषया इति मतान्तरं बोधयितुं प्रसङ्गादुपन्यस्तम् ॥ तिपृ तेपृ ॥ लिङ्सिचावात्मनेपदेषु ॥ इको झल् हलन्ताच्च इति वर्तते असंयोगाल्लिट् कित् इत्यतः किदिति च तदाह । इक्समीपादित्यादि ॥ इकः किम् । यक्षीष्ट । सति कित्त्वे संप्रसारणं स्यात् ॥ आत्मनेपदेति किम् । अद्राक्षीत् । कित्त्वे सति सृजिदृशोर्झल्यमकिति इत्यम् न स्यात् । आत्मनेपदपरत्व सिच एव विशेषणम् न तु लिङः, लिङ्स्थानिकस्यात्मनेपदस्य लिङः परत्वासंभवात् ॥ तेपृ कम्पने च । चकारात्क्षरणार्थस्य लाभादस्य पूर्वत्र पाठस्त्यक्तुं शक्य । केचित्तु तिपृ टेपृ इति पठन्ति ॥ टुवेपृ । वेपथुः ॥ केपृ गेपृ ग्लेपृ च । योगविभागात्पूर्वोत्तरार्थौ चकारेणानुकृष्येते । तदाह । चात्कम्पने गतौ चेति । योगविभागसामर्थ्यादेव अर्थद्वयलाभे चकारो व्यर्थ इत्यन्ये ॥ पुनः पाठ इति । दैन्ये पठितस्य कम्पनाद्यर्थलाभार्थमिति भावः ॥ तॄफल ॥ तरतेरकारस्य गुणशब्देन भावितत्वात्फलभजोरैकरूप्यसंपादकादेशादित्वात् त्रपतेस्त्वेकहल्मध्य-

स्थत्वाभावादप्राप्ते विधिरयम् ॥ तेरतुः । तेरुः फेलतुः । फेलुः । भेजतुः । भेजुः ॥ अबि शब्दे । अस्माद् गुरोश्च हल इति अप्रत्यये अम्बाशब्दः । तिस्रः अम्बा अकारोकारमकारात्मकाः शब्दा यस्य इति बहुव्रीहौ शेषाद्विभाषा इति कप्रत्यये त्र्यम्बक इत्येके ॥ केचित्तु त्रीणि अम्बकानि नेत्राणि यस्येति विग्रहन्ति ॥ अभिरभी इति । सर्वधातुभ्योऽसुन् इत्यधिकारे उदके नुम्भौ च इति वक्ष्यमाणत्वाद् धात्वन्तरेणापि अम्भःशब्दः सिध्यतीति बोध्यम् । अम्भस्तोयम् । तस्यापत्यमाम्भिः भीष्मः । अम्भसो लोपश्चेति बाह्वादिपाठादिञि सलोपः । तद्वोढजं तु इति । पूर्वसवर्णप्रवृत्तेः षत्वाप्रवृत्तेश्च बीजमित्यर्थः ॥ रधिजभोरचि ॥ रन्धयति । परापि वृद्धिर्नित्येन नुमा बाध्यते ॥ अचीति किम् । रद्धा । जब्धा ॥ सनाद्यन्ताः ॥ सनादय इति ॥ सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विप् णिज्यङौ तथा ॥ यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः ॥ धातुत्वादिति । प्रत्ययविशिष्टस्य धातुत्वादित्यर्थः । सुप्तिङन्तमित्यनेन संज्ञाविधौ प्रत्ययग्रहणं नास्ति इति ज्ञापितत्वाद्विशिष्टस्य धातुसंज्ञालाभाय अस्मिन् सूत्रे अन्तग्रहणं कृतम् । भूवादयो धातवः इत्यस्यानन्तरं सनाद्यन्ताश्च इति न सूत्रितम् । सनादयो द्वादश एव इति निर्धारणाभावापत्तेः । सनाद्यन्ता धातवः इत्यस्यानन्तरं तु भूवादयश्च इति पठित्वा धातव इत्येतत्त्यक्तुं शक्यम् ॥ आयादयः ॥ आयीयङ्णिङ इत्यर्थः । विवक्षायामिति । परसप्तम्यां तु आर्धधातुकोपदेशकाले यददन्तम् इत्यनुपद वक्ष्यमाणं न संगच्छेतेति भावः ॥ अन्ये तु गुपू रक्षणे इत्यस्मात् क्तिनि पश्चादायप्रत्यये गोपायतिरित्यनिष्टं प्रसज्येत । विवक्षायामित्युक्ते तु आयप्रत्यये कृते क्तिनं बाधित्वा अप्रत्ययात् इत्यकारप्रत्यये टापि च गोपाया धूपायेति सिध्यतीत्याहुः ॥ कास्प्रत्यया॥ अमन्त्रे किम् कृष्णो नोनाव ॥ अच्छन्दसीति तु नोक्तम् । मन्त्रभिन्ने छन्दसि आम इष्टत्वात् । यथा पुत्रमामन्त्रयामास । प्रत्ययान्तत्वादाम् । अथाह शुनःशेप ईक्षाञ्चक्रे । इजादेश्च इत्याम् ॥ इह चुलुम्पचकासृदरिद्रादिभ्य आमो प्राप्तौ कास्यनेकाच् इति वार्तिकमारभ्यते ॥ प्रत्ययग्रहणमपनीयेति । अन्यथा अ इव आचरति अति अस्य लिटि औ अतुः इत्यादि वक्ष्यमाणं न सिध्येदिति भावः॥ अन्ये तु भाष्यवार्तिकयोः प्रत्ययग्रहणमपनीय इत्यनुक्त्या प्रत्ययान्तादिकाचोप्याम् भवत्येव । अ इवाचरति इत्याचारे क्विपि लिटि आंचकार, आंचक्रतुरित्यादीत्याहुः ॥ अतो लोपः ॥ अनुदात्तोपदेश इति सूत्रादुपदेश इत्यनुवर्तते तदाह । आर्धधातुकोपदेशे इत्यादि ॥ उपदेशे इति किम् ॥ अय पय गतौ । आभ्यां क्विपि वेरपृक्तलोपाद्वलि लोपः पूर्वविप्रतिषेधेन इति वार्तिकात् लोपो व्योः इति यलोपे अतो

लोपः इति लोपो माभूत् । अत् यत् । इह ह्रस्वस्य पिति इति तुक् ॥ आर्धधातुके पर इति किम् । कथयति । वृद्धौ कर्तव्यायाम् अचः परस्मिन् इति स्थानिवत्त्वं यथा स्यात् ॥ गोपायामिति ॥ नन्विह आयप्रत्ययस्यादन्ततामाश्रित्य लोपकरणे फलाभावादुच्चारणार्थ एव तत्राकारोऽस्त्विति चेत् ॥ अत्राहुः । गोपायतं न इत्यत्र गोपायशब्दस्य धातुत्वात् धातोरन्त उदात्तो भवति, ततः शबकारेणैकादेशेऽपि एकादेश उदात्तेन इत्युदात्त एव, तकाराकारस्तु तास्यनुदात्तेन्ङिददुपदेशात् इत्यनुदात्तः । ततश्च उदात्तादनुदात्तस्य इति स्वरितो भवति । स्वरितात्संहितायामनुदात्तानामिति न इत्यस्य एकश्रुतिः आयप्रत्ययस्य अनदन्तत्वेनेदमिष्टं सिध्यतीति॥ स्तुताविवेति। भट्टिस्तु व्यवहारेऽपि प्रायुङ्क्त न चोपलेभे वणिजांपणायामिति॥वणिजां व्यवहारमित्यर्थः । अप्रत्ययादित्यायप्रत्ययान्तादकारप्रत्यये टाप् । चचसे इति। इह अनुनासिकस्य क्विझलोः इति उपधादीर्घो न कृतः । संज्ञापूर्वकविधेरनित्यत्वादिति स्थितस्य गतिमुत्प्रेक्षयन्ति ॥ कमु कान्तौ ॥ अस्य णिङभावे उदितो वा इति क्त्वायामिड्विकल्पः । कमित्वा । कान्त्वा । निष्ठायां तु यस्य विभाषेति निषेधात्कान्तः ॥ अयामन्ता ॥ नामन्तेति सूचितेऽपि णेरनिटि इति वक्ष्यमाणलोपस्य निषेधे गुणायादेशयोः सतोः कामयांचक्रे इत्यादिरूपाणि सिध्यन्त्येव । तथापि ल्यपि लघुपूर्वादित्येवमर्थमयादेशवचनम् । प्रस्तनय्य । सगमय्य । न ह्यत्र गुणायादेशौ लभ्येते ॥ आम् कारयामास ॥ अन्त गण्डयन्तो मण्डयन्तः । हभूवहिवसिसाधिगडिमण्डिजिनन्दिभ्यश्च इत्यौणादिको झच् । झोऽन्तः ॥ स्पृहिगृहीत्यालुच् । स्पृहयालुः ॥ श्रुदक्षिस्पृहिगृहिभ्य आय्यः इत्यौणादिक आय्यः । स्पृहयाय्यः । स्तनिहृषिपुषीत्यौणादिक इत्नुच् । स्तनयित्नुः ॥ णेश्छन्दसि इति इष्णुच् । वीरुधः पारयिष्णवः ॥ णिश्रिद्रु ॥ च्लेः सिचोपवादः ॥ णेरनिटि ॥ णेरिति णिङ्णिचोर्ग्रहणम् ॥ एवमन्यत्रापि बोध्यम् । अनिटीत्यनेनाधिकृतम् आर्धधातुके इत्येतद्विशेष्यते। यस्मिन्विधीति तदादिविधिः । अतो लोप इत्यस्माल्लोपेति चानुवर्तते तदाह । अनिडादावित्यादि ॥ यणि प्राप्तेति ॥ ननु परत्वादियङ्यणादिविधयो यथासंभवमत्र सन्तु नाम, तेषु स्थानिवद्भावाश्रिग्रहणेन ग्रहणाल्लोपो भविष्यतीति चेन्नैव शंक्यम् । इयङादेशे ह्यन्त्यलोपः प्रसज्येतेति दोषः स्यादेत च्चातो लोप इति सूत्रे भाष्ये स्थितम् ॥ न चात्र कारणा कारक इत्यादौ गुणवृद्ध्योः कृतयोरन्तरङ्गत्वादयायादेशयोः कृतयोरन्त्यस्य लोपः प्राप्नोतीति कथमियङादेशे एव दोष उक्त इति शङ्क्यम् । वार्णादाङ्गं बलीय इत्ययायौ बाधित्वा णिलोपो भविष्यतीति भाष्याशयात् ॥

ण्यल्लोपाविति। णिलोप इयङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन। अल्लोपस्तु वृद्धिदीर्घाभ्यामिति विवेकः॥ णिलोपस्य निरवकाशत्वेन वार्तिकस्योक्तिसंभव एव नास्तीत्यत आह। पाक्तिरित्यादि क्तिजन्तमिति। तत्र तितुत्र इतीण्निषेधादिति भावः॥ वचनसामर्थ्यादिति॥ अयं भावः णेरित्येतावति सूत्रे कृतेपि आर्द्धधातुकेत्यनुवृत्त्या आर्धधातुके परतः प्रवर्तमानो णिलोपेयङ्यणादिभिर्बाधितः सन् परिशेषात् क्तिच्येव स्यादिति अनिटीत्यस्य वैयर्थ्यं प्रसज्येत। तथा चानिडार्धधातुकं सर्वमप्यस्य विषयो न तु क्तिजन्तमेवेति। अयमिति॥ णिलोपइत्यर्थः। अलोपांशे तु वचनमपेक्षितमेव। तेन चिकीर्षकेत्यत्र वृद्धिः चिकीर्ष्यादित्यत्र अकृत्सार्व इति दीर्घं बाधित्वा पूर्वविप्रतिषेधेन अतो लोपइति लोपो भवतीत्याह॥ णौ चङ्युपधाया ह्रस्वः॥ उपधायाः किम्। अचकाङ्क्षीत्॥ सन्वल्लघुनि॥ चङ्परे इत्येतावतैव णिरिति न लभ्यते। श्रिद्रुस्रुवामपि चङ्परत्वादत आह। अङ्गसंज्ञानिमित्तं यच्चङ्परमिति॥ अङ्गस्याभ्यासेति। अङ्गस्य ये द्वे विहिते तयोः पूर्वोभ्यास इत्यर्थः॥ अंगस्येति नावर्ततइति। अस्मिंस्तु व्याख्याने चङ्परइत्येतावतैव णिरिति लभ्यते। श्रिद्रुस्नुषु परेषु अंगत्वासंभवादतो व्याचष्टे। चङ्परे णौ यदंगमिति चङ्परेत्यस्यैव व्याख्यान णाविति ज्ञेयम्॥ अनग्लोपे किम्। अचकथत्॥ सन्यतः॥ अत्र लोपोभ्यासस्येत्यतः अभ्यासस्येति भृञामिदित्यत इद्ग्रहणं चानुवर्तते तदाह। अभ्यासस्येत्यादि॥ तपरकरणं किम्। पापच्यते सन्। पापचिषते॥ न च सनि योभ्यासः सन्निमित्तेति विज्ञानात्तपरकरणाभावेपि नोक्तातिप्रसंगः। अभ्यासस्येह यङ्निमित्तत्वादिति वाच्यम्। तादृशविवक्षायामधीषिषति प्रतीषिषतीत्यादावव्याप्तेः॥ न हि कार्यी निमित्तत्वेनाश्रीयते। यद्याश्रीयेत तर्हि द्विर्वचनेचीति निषेधेन रिस्शब्दस्य द्वित्वाप्रवृत्तावरिरिषतीत्यादि न सिध्येत्॥ नन्वेवं पिपक्षतीत्यादावव्याप्तिरभ्यासस्य सन्परत्वाभावात्। न च येन नाव्यवधानन्यायेन सन्प्रवृत्त्या व्यवहितेप्यभ्यासस्येत्वं स्यादेवेति वाच्यम्। प्रतीषिषतीत्यादावभ्यासस्याव्यवहितसन्परत्वसंभवादुक्तन्यायप्रवृत्तेरिति चेत्॥ अत्राहुः। सना धातुमाक्षिप्य सनि यो धातुः सन्नन्तस्तदीयाभ्यासस्येति व्याख्याने नोक्तदोषः। न च सनि परे अभ्यासस्येति यथाश्रुतं परित्यज्योक्तव्याख्याने किं मानमिति वाच्यम्। तपरकरणस्यैव तत्र मानत्वात्। किं च अकारग्रहणमपि तत्र मानम्। अन्यथा सनीत्येव ब्रूयात्। तावताप्यधीषिषतीत्यादावित्त्वप्रवृत्तिसिद्धेरिति॥ दीर्घो लघोः॥ लघोरभ्यासस्येति॥ ननु अज्झल्समुदायस्याभ्यासस्य लघुसंज्ञा दुर्लभा ह्रस्वं लघु इति सूचितत्वात्॥ नैष दोषः। इमे हि न समानाधि-

करणे षष्ठी, किं तु व्यधिकरणे । तथा चाभ्यासावयवस्य लघोर्दीर्घ इत्यर्थः ॥ लघुनि चङ्परेनग्लोप इति सर्वमिहानुवर्तते ॥ तच्च प्राग्वदेव द्वेधा व्याख्येयं तदाह । न्वद्भावविषयेति ॥ हलादेरिति प्राचोक्तमिहोपेक्षितम्, निष्प्रमाणत्वात् । न हि मुनित्रयोक्तिं विना हलादेरिति व्याख्यातुमुचितम् । न चैवमौन्दिदत् आट्टिटदित्यादौ दीर्घः स्यादिति शङ्क्यम् । अङ्गलघोरुभयोरपि णिचं प्रति विशेष्यत्वे दीर्घस्य तत्राप्राप्तेः । चङ्परे हि यदंगम् उन्द इति न तदीयोभ्यासः, न वा चङ्परणिच्परं यल्लघु तत्परः एतेन आट्टिटदित्यादिभाष्योदाहरणमेव हलादेरिति व्याख्याने प्रमाणमिति केषांचिदुक्तं चापि प्रत्युक्ता ॥ दीर्घाप्राप्त्यैवोदाहरणसौष्ठवस्योक्तत्वात् ॥ लघोः किम् । ण्णु हिंसायाम् । अचिच्चणत् ॥ शास्त्रेऽस्मिन् कार्यकालं संज्ञापरिभाषम् यथोद्देशं संज्ञापरिभाषमिति पक्षद्वयमप्यस्ति जातिव्यक्तिपक्षवत् । तथा च पूर्वोभ्यासइत्यस्य सन्वल्लघुनीत्यादिना सह पक्षद्वयेप्येकवाक्यता समानैव । तथापि कार्यकालपक्षे पदैकवाक्यता । यथोद्देशपक्षे तु वाक्यैकवाक्यता इत्यस्ति विशेषः ॥ तत्रेदानीं कार्यकालपक्षपाति माधवमतं तावद्व्याचष्टे । संज्ञायाइत्यादिना श्लोकद्वयेन । अंगं यत्रेति । अयं भावः । सन्वल्लघुनि, दीर्घो लघोरिति सूत्रद्वये अंगस्येत्यनुवर्तते । अभ्यासस्येति च । तेनांगस्य ये द्वे तयोः पूर्वोभ्याससञ्ज्ञकस्तस्येति फलितम् । द्वे इत्यत्र च उच्चारणे इति विशेष्यसमर्पकमध्याक्रियते । तच्च कृदन्तं तद्योगादंगस्येति कर्मणि षष्ठी । तेन यत्रांगं द्विरुच्यते तत्रैव पूर्वस्य दीर्घसन्वद्भावौ स्तः इति । अचीकरत् । अपीपचत् ॥ युक्तं चैतत् । अंगस्येति षष्ठ्या कारकविभक्तित्वसंभवे तदुपेक्ष्य शेषषष्ठीत्वकल्पनाया अन्याय्यत्वात् ॥ नांगं द्विरुच्यते इति । एवं चाचकासत् आर्थथपत् औणुनवद् इत्येव भवतीति भावः ॥ अवयवः कश्चिदिति । हलादिः प्रथमावयवो द्विरुच्यते अनादेस्तु द्वितीयावयवइत्यर्थः ॥ अङ्गं यत्र द्विरुच्यते तत्र पूर्वस्य दीर्घसन्वद्भावौ एकाच्त्वे फलितौ । किं च । अस्मिन्पक्षे एकाचः इत्यंगस्य विशेषणं शब्दतोपि सुलभम् एकाचो द्वे इत्यधिकारादित्याशयेनाह । तस्मादेकाच्विति । स्यादेतत् । उक्तरीत्या कृत्स्नहलादिशेषचुत्वादीन्यपि अनेकाच्सु न स्युः । न चेष्टापत्तिः । दिद्रासति । दिदरिद्रासति जिगणयिषतीत्यादिलक्ष्यस्य सर्वसंमतत्वात् । तन्निर्वाहार्थं यथोद्देशपक्ष आश्रीयत इति चेत् तर्हि इहापि स एवोचितः । अर्थाधिकारपक्षस्यैवाभ्यर्हितत्वाद् वृत्त्यादिषु स्वीकृतत्वाच्चेति अभिप्रेत्याह । वस्तुत इति ॥ ऊर्णौ दीर्घ इति । स्यादित्यपकृष्यते । औणुनवत् इह सन्वद्भावस्तु नोपयुज्यते णौ कृतस्यादेशस्य स्थानिवद्भावेन निषेधेन वा नुशब्दस्य द्वित्वे सति अभ्यासे अवर्णाभावादिति भा-

वः ॥ अर्थापयताविति । अथमादष्टे इत्यर्थ णिच्यापुगागमे ततश्च चलेश्चङि दीर्घस्य सन्वतितीत्वस्य च प्रवृत्तौ आर्तौ यपदित्येव भवतीति भावः ॥ अर्थ उपयाच्ञा-यामित्यस्य तु चङ्परे णौ आर्तथर्तति भवति, न तत्र दीर्घसन्वद्भावयोः प्रवृत्ति-रिति चुरादौ स्फुटीभविष्यति ॥ उभयमिति । दीर्घः सन्वच्चेत्येतद्द्वयमित्यर्थः ॥ न स्यात् स्याच्च व्यवस्थयेति । चङ्परे णौ यल्लघु इति व्याख्याने न स्यात् । च-ङ्परे णा यदङ्गम् इति व्याख्याने तु स्यात् । एव च अचचकासत् । अचीचकास-दिति व्याख्याभेदेन रूपद्वयमित्यर्थः ॥ ननु यथा चङ्परे णौ यल्लघ्विति व्या-ख्याने येन नाव्यवधान न्यायेन अपीपचदित्यादावेव उभय भवति न त्वनेकव्य-वाये अचचकासदित्यादौ तथा न्यायसाम्येन लघुनि योभ्यास इत्यत्राप्येकेनैव व्यवायस्य लोकायत्वादचिच्चणदित्यादौ सन्वदितीत्व न स्यादिति चेत्। अत्राहुः। अ-त्स्मृदृत्वर इतीत्वापवादेन अत्ववचनेन तुल्यजातीयापेक्षेण संयोगस्य व्यवधानेपि इ-त्वस्य ज्ञापितत्वान्नाक्तदोष । अत एव दीर्घो लघोरिति सूत्रे लघोः इति सार्थकम्॥ माधवोपि जागृ धातौ इत्थमेवाह । एव च वदन् यथोद्देशपक्षमेवाश्रियत् ॥ तथा च ऊर्णु धातोः यत्तेनोक्तमौर्णुनवदित्यत्र दीर्घो लघोः इत्यभ्यासस्य दीर्घो न भवति चङ्परे णौ यदङ्ग तस्य योभ्यासः इति सूत्रार्थात् । अत्र तु अङ्गावयव-स्याभ्यासो न त्वङ्गस्येत्यादि ॥ तत्र तस्यापि आग्रहो नास्तीति गम्यते ॥ अत एव चकास्तावचीचकासदित्युदाजहार ॥ तथा च मतभेदा-भिप्रायेण पूर्वापरग्रन्थविरोधः समाधेय इति ॥ कातन्त्रपरिशिष्टे त्वित्वदीर्घयोः अजीजागरदित्युदाहृतम् ॥ तन्मतद्वमयप्यसंभ वादुपेक्ष्यम् ॥ व्यवस्थामेव विवृणोति । णेरिति । संनिहितमिति हेतुगर्भविशेषणं लघुनीत्येतत् णेर्विशेष्यं भवति । संनिहितत्वादित्यर्थः ॥ अङ्गमेवेति । अस्य चङ्परे इत्यत्र आदेशरूपचङंशे आकाङ्क्षाभावेपि णाविति प्रत्ययांशे उत्थिता-काङ्क्षत्वादिति हेतु स्पष्ट एवेति भावः ॥ कैयटेनैवेति । तथा च एकं हरदत्तम-तम् । अपरं तु, कैयटमतमिति विषयविभागेन व्याचक्षाणा उपेक्ष्या इति भावः ॥ चङ्पर इत्यावर्त्य अग्लोपविशेषणतयापि योजितम् । तस्य फलमाह । णेरिति । श्रिद्रुस्रुषु परतो अग्लोपित्वासंभवादिहापि चङ्पर इत्येतावतैव णाविति ल-भ्यते इति बोध्यम् ॥ अगितामपीति । पचिकमिशकिप्रभृतीनामित्यर्थः । नङ्गी-तस्त्रकादौ लोपो णिच प्रतीक्षत इति भावः ॥ नोपदेशफलमिति । अनुस्वार इत्यर्थः । दधन्तीति । नुगतोनुनासिकान्तस्येत्यभ्यासस्य नुक् ॥ गत्यादिष्विति । गतिशब्दसभक्तिष्वित्यर्थः ॥ मीम्ह । ऋदित्फलं तु नाग्लोपीति निषेधः । आ-

मिमीमत् ॥ ष्ठिवुक्लमु । ष्ठीवति । क्लाम्यति ॥ आङि चम इति । ष्ठिवुक्लमुचा-चमामिति वृत्तिकारोक्तपाठोऽयुक्त इति भावः ॥ जिमिं केचिदिति । तथा च जेमनमिति भोजने प्रयुञ्जते ॥ वा भ्राश ॥ उभयत्रविभाषेयम् । अनवस्थानार्थो भ्रमिः, क्लमिस्त्रसी च दिवादी ॥ तेभ्यो नित्यं प्राप्ते चारम्भात् ॥ भ्राश भ्लाश दीप्तौ । फणादावेतौ ॥ भ्रमु चलने भ्वादिः ज्वलादिः फणादिरपि मनोरमा-यां पठ्यते, तदद्भ्रसादिति नव्याः ॥ भ्रमु अनवस्थाने । दिवादिः पुषादिः शमा-दिः, तत्र भ्वादेः भ्रम्यति भ्रमति । शमादेस्तु श्यनि दीर्घे भ्राम्यतीति वैरूप्यम् । क्लमु ग्लानौ । त्रसी उद्वेगे । त्रुट छेदने । लष कान्तौ ॥ क्रमः ॥ ष्ठिवुक्लमुचमामि-त्यतोऽनुवर्तनादाह । परस्मैपदे शितीति । परस्मैपदे किम् । उपक्रमते । परा-क्रमते ॥ स्नुक्रमोः ॥ अनात्मनेपदनिमित्ते इति । आत्मनेपदनिमित्ताभावे इ-त्यर्थः ॥ अन्ये तु द्विवचनस्थाने व्यत्ययेन एकवचनम् अनात्मनेपदनिमित्तयो-रित्यर्थ इत्याहुः ॥ उभयोरपि भावकर्मकर्मव्यतिहारास्तङ्निमित्तं क्रमेस्तु वृत्ति-सर्गादयोपीति बोध्यम् ॥ स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थोयमित्याह । अत्रैवेडिति ॥ अनात्मनेपदेति किम् । उपस्नोष्यते जलेन । उपक्रंस्यते ॥ निमित्तइति किम् । स्नौतीति स्नविता स इवाचरति स्नविस्त्रीयते । इह क्यङ् आत्मनेपदनिमित्तं न तु स्नौतिरित्याहुः ॥ लुङ्लिटां धस्येति ॥ लिटि । लिलिह्वि-ढ्वे लिलिह्विध्वे ॥ अथ कथमिति । शानचा भाव्यमिति शङ्कितुराशयः ॥ क्नूयी शब्दे उन्दे च ॥ उन्दः क्लेदनम् ॥ लिङ्ङ्डीश ॥ यङि पेपीयते ॥ दीपजन ॥ दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने । एते दिवादयः ॥ चिणो लुक् ॥ परस्य लुक्स्यादिति । तशब्दस्येति केचित्पठ्यते । तदार्थिकार्थकथ-नम् । तशब्दे परतः चिणि विहिते चिण परस्य जायमानो लुक् प्रत्ययस्य प्रत्य-यस्य लुक्श्लुलुप इति वचनात्तशब्दस्यैवेति स्पष्टत्वात् ॥ अयमिति । षेट्ट धातुः । भाष्यविरुद्धमिति । यदि सोपदेशः स्यात्तदा स्त्यायतिरिवायमपि षोपदेशलक्षणे पर्युदस्येत तदकरणान्नास्ति सोपदेश इति भावः । प्लवगताविति । केचित् प्लव इति धात्वन्तरमित्याहुः ॥ तद्धि मनोरमायां दूषितम् । प्लवेति धात्वन्तरत्वे विभाषाङि रुप्लुवोः इत्यत्र प्लु वः पक्षे घञ्विधान व्यर्थं स्यात् ॥ प्लवेत्येतस्माद्घञि आप्लावशब्दस्य सिद्धत्वात् । तथा स्रवतिशृणोति इति सूत्रेण प्लवतेरभ्यासोकारस्य इत्त्वविधानमपि व्यर्थं स्यात् । तिद्ध पक्षे अपिप्लवदिति रूपसिद्धयर्थं क्रियते । तच्च रूपं प्लवधा-तोः सन्यत इत्यनेन सिद्धमिति किं तदुपादानेनेति ॥ ममव्येति । यस्य हल इ-ति लोपस्तु न भवति यस्येति संघातग्रहणमिति सिद्धान्तितत्वात् । वर्णग्रहणे

अनन्त्यस्यापि लोपः स्यात् । तथा च मतः नतः नद्धः मीढः मुक्त इत्यादि न सि- ध्येदत आह ॥ लुप्तषष्ठीकमिति ॥ वनतीतरेषामिति । वनतेरव्यभिचाराद्विशेष णं व्यर्थमिति भावः ॥ वतिः । इह क्तिनि तितुत्र इति इण्निषेधाज्झलि क्ङिति नलोपः ॥ लोपः स्यादिति । अलोऽन्त्यस्येति भावः । अनुनासिकान्तानुदात्तोपदेशा- न्दर्शयति ॥ यमिरमीति । तनोत्यादीनप्यनुनासिकान्तान् दर्शयति ॥ तनुषणुच्च- णुक्षिखिति । करोतिवर्जितास्तनोत्यादयो नव । तन्मध्ये सनोतिः जनसनखनाम् इत्यात्व वक्ष्यतीति न स परिगणितः । ततः चतः क्षित इत्यादीन्युदाहरणानि । तनोत्यादीनामुदित्त्वात् क्त्वायामिड्विकल्पनान्निष्ठायां नेट् ॥ अनुनासिकान्ताना- मिति किम् । शक्तः । रुग्णः ॥ झलीति किम् । गम्यते । नम्यते ॥ क्ङितीति कि म् । गन्ता । मन्ता ॥ जघान जघ्नतुरिति । यश्चाप्यत्र अभ्यासाच्च इत्यस्यापि प्र- वृत्तिरस्ति । तथाप्यन्तरंगत्वाद् हो हन्ते' इत्युपन्यस्तम् ॥ आभीयतयेति ॥ सन्नि- पातपरिभाषयापि हेर्लुग् नेति वक्तुं शक्यमिति केचित् ॥ तन्मन्दम् । अतो हे- रित्यारम्भसामर्थ्यात्तस्या अप्रवृत्तेरिति नव्याः ॥ वधादेशोऽदन्त इति । तेन आदे- शोपदेशे अनेकाच्त्वात् अवधीदित्यत्र एकाचः इतीण्निषेधाप्रवृत्ताविडादौ सिचि अतो हलादेरिति प्राप्ता वृद्धिरल्लोपस्य स्थानिवत्त्वान्नेति भावः ॥ दुह प्रपूरणे । प्र- पूरणं त्याजनम् ॥ लङ्वदपीति । अदुग्ध । अदुग्धाः । अदुग्ध्वम् । अदुह्वहि ॥ दिह । उपचयो वृद्धिः ॥ प्रणिदेग्धीति । नेर्गदेति णत्वम् ॥ अलिक्षतेति । शल इगुपधा इति क्सः । अलिक्षाताम् । अलिक्षन्त ॥ अलीढेति । लुग्वा दुह इति वा लुक् । अलीढाः । अलीढ्वम् ॥ चक्षिङ् ॥ दर्शनेपीति । विश्वा रूपा अभिचष्टे शची- भिः इत्यत्र दर्शनार्थत्वेन व्याख्यातत्वादिति भावः ॥ युजर्थं इति । अनुदात्तेतश्च हलादेः इति युच् ॥ अन्तेदित इति । इदितः इति नुम्विधौ गोः पादान्ते इत्य- स्मादन्ते इत्यनुवर्तत इति भावः ॥ एवं च नुमागमशंकानुत्थानाय चक्षिङ इका- रस्थाने अकार एव आसक्तुमुचितः । अनुदात्तत्वेनैव तङि सिद्धे ङकारो व्यर्थ इ- त्याशंक्याह ॥ ङकारस्त्विति ॥ स्फायन्निति । स्फायी वृद्धौ इत्यनुदात्तेतो लटः शत्रादेशः ॥ चष्टे इति । स्कोः इति कलोपः, ष्टुत्वम् ॥ ख्शादिरिति । तेन पुंख्या- नमित्यत्र पुमः खय्यमपरे इति रुत्वं नेत्यादि पूर्वार्द्धे एवोक्तम् ॥ असिद्धकाण्डे इ- ति । णत्वप्रकरणानन्तरमिति शेषः । तेन पर्याख्यानमित्यत्र शकारेण व्यवधाना- त् कृत्यचः इति णत्वं न । तथा सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः । यत्वस्यासिद्धत्वाद् धन्वयोपधात् इति वुञ् न, किं तु छ एवेति बोध्यम् ॥ अच- ष्टेति । स्कोः इति कलोपः ष्टुत्वम् ॥ अस्यतिवक्ति ॥ ख्यातीत्यत्र विधिसामर्थ्यादत्र

नासिद्धम् । स्वतन्त्रस्य ख्याधातोः सार्वधातुकमात्रविषयताया वक्ष्यमाणत्वात् । अस्यतेः पुषादिपाठादङि सिद्धे तदर्थं ग्रहणमित्यादि पुषादिषु वक्ष्यति । वक्तीति ब्रुवो वचिः वच परिभाषणे इति उभयोर्ग्रहणम् ॥ ईर् ॥ ईरिता । ईरिष्यते । लङि । ऐर्त । ऐराताम् । ऐरत । ऐरि । ऐर्वहि ॥ ऐर्महि ॥ ईशः से ॥ यथाश्रुतसूत्रन्यासे ईशो ध्वेशब्दे परे ईशिध्वमिति न सिध्येदत आह । ईशीड्जनामिति । वैचित्र्यार्थ इति । ध्वे इत्यस्य पूर्वत्रापकर्षः । से इत्यस्योत्तरत्रानुवृत्तिरित्येवं विचित्रबोधार्थमित्यर्थः । इह काशिकादौ जनेरुदाहरणमुक्तम् । तथा हि । जनी प्रादुर्भावे इत्यस्मात् श्यनश्छान्दसो लुक् उपधालोपाभावश्च । जनिषे । जनिध्वे । जनिष्व । जनिध्वम् । जन जनने इति श्लुविकरणस्याप्युपधालोपे व्यतिजज्ञिषे । व्यतिजज्ञिध्वे । कर्तरि कर्मव्यतिहारे इति तङ् ॥ नमोवाकमिति । नमस्ते ,रुद्र मन्यवे इत्यादि नमोवचनम् । वचेर्घञ् । चजोः इति कुत्वम् ॥ ववसे इति । वादित्वादेत्वाभ्यासलोपौ न ॥ णिसि चुम्बने ॥ वभ्रामेति । नुम्विसर्जनीय इति सूत्रे वृत्तिपदमञ्जर्यादिभिरुक्तं नुमादिभिः प्रत्येकं व्यवाये षत्वमिष्यते तेन निंस्से निंस्स्वेत्यत्र न भवति इति । तच्चास्य सान्तत्वे युज्यते, शान्तत्वे तु व्रश्चादिषत्वे षढोः इति कत्वे कवर्गात्परत्वे षत्वं दुर्वारमिति प्रत्युदाहरणमिदं न सगच्छत इति भावः ॥ णिजि शुद्धौ । अनिट्केषु णिजिर् इति जौहोत्यादिकस्य ग्रहणादयं सेडिति ध्वनयति ॥ निञ्जितेति ॥ शिजि अव्यक्ते शब्दे । क्तप्रत्यये शिञ्जितम् । आवश्यकणिन्यन्तात् ङीपि शिञ्जिनी । भूषणानां तु शिञ्जितम् । मौर्वी ज्या शिञ्जिनी गुण इति चामरः ॥ सुषुविषे इति । स्वरतिसूति विकल्पं बाधित्वा श्रुयकः कितीति निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् ॥ शीङ् स्वप्ने ॥ क्ङिति चेत्यस्येति । अन्यत्र सार्वधातुकार्धधातुकयोरित्यनेन सिद्धमिति भावः ॥ शीङो रुट् । झोन्त इत्यतो झ इत्यनुवर्तते । अदभ्यस्तादित्यतोऽदिति च । तथा चेष्टानुरोधेनाऽदिति प्रथमान्तस्य षष्ठ्यन्तत्वमाश्रित्य व्याचष्टे ॥ झादेशस्याऽत इति । झस्यैव रुडागमे तु अदादेशो दुर्लभ इत्यादित्यस्याप्यनुवृत्तिः कृता ॥ शिश्ये इति । एरनेकाच इति यण् । शेताम् । शयाताम् । शेरताम् । शेष्व । शयाथाम् । शेध्वम् ॥ उतो वृद्धिः ॥ नाभ्यस्तस्याचि पितीत्यतो निषेधानुवृत्तेराह ॥ न त्वभ्यस्तस्येति ॥ उतः किम् । एति । एषि ॥ लुकीति किम् । सुनोति । जुहोति ॥ हलि किम् । यवानि । यवाव । आडुत्तमस्येत्याडागमः पित् ॥ पिति किम् । युतः । रुतः ॥ नाभ्यस्तस्येति किम् । योयोति । रोरोति ॥ सार्वधातुके किम् । यूयात् । न चात्र ङिच्च पिन्नेति व्याख्यानान्निर्वाहः शङ्क्यः किदाशिषीति यासु-

टः कित्त्वात् । केचित्तु, युयात् स्तुयात् इत्यादावपि ङिच्च पिन्नेत्येतदाश्रित्य व्याचक्षते संज्ञापूर्वकविधेरनित्यत्वाद्वृद्धिर्न भवति । अन्यथा उत औद्वित्येव वदेदिति॥ तुरुस्तु ॥ तुः सौत्रो धातुरिति वक्ष्यति ॥ अपिदर्थमिति ॥ एभ्यः परस्य पितः सार्वधातुकस्येति प्राचो व्याख्यानं प्रामादिकम् । रुवतीः स्तुवीत इत्याद्यसिद्धप्रापत्तेरिति भावः । शम्यमोरुदाहरणं तु शमीध्वम् । अभ्यमीति अभ्यन्ति । शम्यमोश्छन्दसि विकरणस्य लुकि सति हलादिसार्वधातुकमनन्तरं संभवतीति काशिकायामुक्तम् ॥ आपिशलास्तु तुरुस्तुशम्यमः सार्वधातुके छन्दसीति पठन्ति ॥ तन्मते सूत्रमिदं छन्दस्येव ॥ ऊर्णोतेर्विभाषा ॥ उतो वृद्धिरिति नित्ये प्राप्ते विभाषेयम् ॥ हलादौ किम् । ऊर्णवानि ॥ पिति किम् । ऊर्णुतः ॥ सार्वधातुके किम् । ऊर्णूयात् । ऊर्णोतेराम्नेति ॥ ऊर्णोतेर्णुवद्भावो वाच्य इति वक्ष्यमाणस्य आमभावोपि फलमिति भावः ॥ नन्द्राः ॥ अजादेरिति वर्तते स च कर्मधारयः आदिग्रहणस्य तु प्रकृतेऽनुपयोगस्तदेतदाह ॥ अचः परा इति । उन्दिदिषति । अड्डिडिषति । अर्चिचिषति ॥ न्द्रा इति किम् । ईक्षतेः सनि ईचिक्षिषते ॥ संयोगादयः किम् । प्राणिणिषति । अरिरिषति ॥ अचः पराः किम् । इन्द्रीयितुमिच्छतीति क्यजन्तात् सनि इन्दिद्रीयिषति । इह नकारस्य द्वित्वाभावेपि दकारस्तु द्विरुच्यत एवाचः परत्वाभावात् ॥ नुशब्दस्येति । उपदेशे नकार एव । णत्वं तु रषाभ्यामित्यनेनेति भावः । पूर्वत्रासिद्धीयमिति । अत्र द्विर्वचनशब्देन षाष्ठमाष्टमिकं चोभयं गृह्यते । तत्र षाष्ठस्य ऊढिमाख्यत् औडिढत् इत्युदाहरणम् । आष्टमिकस्य तु द्रोग्धाद्रोग्धा द्रोढाद्रोढेति । इह त्रिपादीस्थघत्वढत्वादिकं द्विर्वचने सिद्धमेव । असिद्धत्वे तु त्रिपादीस्थकार्यात् पूर्वमेव द्रोग्धा इत्यस्य द्वित्वे पश्चात् वाद्रुहेति घत्वढत्वयोः प्रवृत्तौ द्रोग्धा द्रोढेत्यपि द्विर्वचनं कदाचित् स्यात् न तु द्रोग्धा द्रोग्धेति समानजातीयस्यैव नियमेन द्विर्वचनं सिध्यति । किं च षट् सन्त इत्यत्र डस्य चर्त्वे टकारस्य द्वित्वं पूर्वत्रासिद्धीयमद्वित्व इत्युक्तेरिति मनोरमादावुक्तम् । अत एव सुद्रुपास्य इत्यत्र धस्य जश्त्वेन दकारे व्यक्तिभेदात् दकारस्यापि द्वित्वं सुवचमेवेत्याहुः ॥ अनित्यमिति । अत एव ढतिशब्दस्य द्वित्वमौजिढदित्यपि नामधातुषु वक्ष्यति ॥ उभौ साभ्यासस्येति । अनितेरित्यनेन णत्वं कृत्वा द्विर्वचने कृते प्राणिणत् प्राणिणिषतीति सिद्धमिति सूत्रमिदं ज्ञापकमित्यर्थः । एवं च प्रणिनायेत्यादौ द्वितीयस्य णत्वाभावः सिद्धः ॥ विभाषोर्णोः ॥ गाङ्कुटादिभ्य इत्यतो ङिदिति विज इडित्यत इडिति चानुवर्तते इत्याशयेनाह ॥ इडादिप्रत्यय इत्यादि । तेन गुण-

विकल्पे पक्षे उवङ् ॥ गुणोऽपृक्ते ॥ नाभ्यस्तस्याचीत्यतः पिति सार्वधातुके इति ततो वृद्धिर्लुकि हलीत्यतो हलीति वर्तते । तदाह ॥ हलादावित्यादि ॥ ऊर्णोतेर्विभाषा ॥ सिचि वृद्धिरिति सूत्रं नेटीत्यत इटीति चानुवर्तत इत्याशयेनाह ॥ इडादावित्यादि ॥ स्तवीतीति । तुरुस्तुशम्यम इति इड्वा ॥ स्तुसुधूञ्भ्य इत्यत्र परस्मैपदेष्विल्लुक्तेरात्मनेपदे तु नेट् । अस्तोष्ट । अस्तोषाताम् ॥ ब्रुवः पञ्चानाम् । विदो लटो वेत्यतो लटो वेति वर्तते । ब्रुव इत्येतदादिमं पञ्चम्यन्तम्, अन्तिमं तु षष्ठ्यन्तमित्याशयेनाह ॥ ब्रुवो लट इत्यादि ॥ चत्वंमिति । प्रक्रियालाघवात् आहस्त इत्येव सुवचमित्याहुः ॥ ब्रुव ईट् ॥ हलादेः किम् । ब्रवाणि ॥ पितः किम् । ब्रूतः ॥ झलीति यत्वविधानादिति । ईडागमे कृते झलादित्वाभावादिति भावः ॥ इण् गतौ ॥ इयङोऽपवाद इति । येन नाप्राप्तिन्यायेनेति भावः । गुणवृद्धी तु परत्वादस्य बाधिके । अयनम् । आयकः ॥ दीर्घ इणः किति ॥ अत्र लोपोऽभ्यासस्येत्यतोऽभ्यासस्य इत्यनुवर्तते, व्यथो लिटीत्यतो लिटीति च ॥ किति किम् । इयाय । अत्र वदन्ति । इह दीर्घे कृतेऽपि अभ्याससस्यासवर्णे इतोयङा रूपसिद्धेः कितीति व्यर्थम् । न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम् । ईयुरित्यत्र वार्णादाङ्गं बलीय इति यणि कृते दीर्घविधेरावश्यकत्वात् । किं च लिटीत्यनुवर्तनमपीह व्यर्थमेव व्यावर्त्याभावादिति ॥ एता । एष्यति । एतु । इतात् इताम् । यन्तु । इहि । उत्तमे तु अयानि । अयाव । अयाम । लङ्मध्यमे ऐः । ऐतम् । ऐत । उत्तमे तु आयम् । ऐव । ऐम ॥ ईयादिति । अकृत्सार्वेति दीर्घः ॥ एतेर्लिङि ॥ इह आर्द्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम् । किति लिङीत्येतावतैवेष्टसिद्धेः ॥ उभयत आश्रय इति । अन्तादिशब्दौ अवयवविशेषवाचिनौ । तत्र यदि पूर्वस्य अवयवबुद्ध्या एकादेश आश्रीयते, तदा तस्यैव परस्य कथमादिवद्भावः । एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः ॥ नन्वेवं रामौ इत्यस्य सुप्तिङन्तमिति पदत्वं न स्यात्, परादित्वे रामेति प्रकृतेरभावात् यस्मात् प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति स्वीकाराद्राम इत्यस्य प्रकृतित्वात् । पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् ॥ अत्राहुः । पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोषः । इह च ज्ञापक सुपिसूतिसमा इति ॥ विध्यादौ समीयादिति न भवत्येव । आशीर्लिङि तु अकृत्सार्वेति दीर्घे कृतेऽपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह ॥ भौवादिकस्येति । इटकिटकटी इत्यत्र प्रश्लिष्टस्य ईधातोराशीर्लिङि इदं रूपम् । वीगतीत्यत्र ईकारोऽपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादि-

लिङ्यपि भवत्येवेति बोध्यम् ॥ गाङ् लिटि ॥ लावस्थायामिति । वार्तिकमते ए-कादेशात् प्रागेव गाङादेशे द्विर्वचनेऽचीति सूत्रं न प्रवर्तते द्वित्वनिमित्ताचोऽभा-वात् ॥ विवक्षित इति । भाष्यमते तु सुतरां न प्रवर्तते, अनैमित्तिकत्वादिति भावः॥ निर्देशाश्च भवतीति। वार्णादाङ्गं बलीय इति समाधानं तु न प्रवर्तते व्याश्रयत्वादिति भावः॥ अध्येयतेति। आत्मनेपदेष्वनत इति झस्य अत्। लङ्मध्यमे तु अध्येथाः। अ-ध्यैयाथाम्। अध्यैध्वम्। अध्येषीष्टेति। लिङः सीयुट्। अध्येषीयास्ताम्। अध्येषीरन्॥ गाङ्कुटादिभ्यो ॥ इह गाङ् गतावित्यस्य न ग्रहणम्। तङ्ङर्थतया ङकारा-नुबन्धस्य तत्र चरितार्थत्वात् । आदेशङकारस्त्वचरितार्थः । स्थानिवद्भावेनैव तङः सिद्धत्वादत आह ॥ गाङादेशादिति । कुटादिस्तुदाद्यन्तर्गणः। केचित्तु कुट आदिर्येषां ते कुटादयः । कुटस्य आदिः कुटादिः कुटादिश्च कुटादयश्च कु-टादयः इति समासद्वयमाश्रित्य कुटपूर्वस्य लिखधातोरपि ग्रहणाल्लिखनमिति प्रयोगः सिद्ध इत्याहुः। तच्च रलोव्युपधादिति सूत्रस्थेन लिखित्वा। लेखित्वा॥ लिलिखिषति। लिलेखिषतीति वृत्तिग्रन्थेन शकुनिष्वालेखन इति सौत्रप्रयोगेण च विरुध्यते ॥ अञ्णिदिति किम् । घञि कोटः पोटः। णलि चुकोट पुपो-ट ॥ घुमास्था ॥ दीङो युडचीत्यतः क्ङितीत्यनुवर्तते । आर्धधातुक इति चाधि-क्रियत एव ॥ क्ङिति किम्। दाता ।धाता ॥ हलादौ किम्। ददतुः। ददुः । अन्यथा आतो लोपात्परत्वादीत्वं स्यात् ॥ आर्धधातुके किम्। मातः। मा-थः॥ अध्यगीष्टेति॥ सिचो ङित्त्वादीत्त्वम्। इक् स्मरणे। ककार इह इखदिक इति विशेषणार्थः । एरित्युक्ते तु इटकिटकटीत्यत्र प्रश्लिष्टस्य इधातोरपि ग्रहणं स्यादित्याहुः ॥ केचित्तु इति। आर्द्धधातुकाधिकारे वार्तिकपाठात्तदधिकारो-क्तानामेव कार्याणामुपस्थितत्वादतिदेश इति भावः ॥ अधीयन्निति । स्मर-न्नित्यर्थः। रायवयोरित्यत्र अधीगर्थदयेशां कर्मणीति षष्ठी॥ वीगति॥ अडाग-मात्परत्वादियङ्॥ अवियन्निति ॥ अडागमे सतीति। कृताकृतप्रसङ्गित्वमा-त्रेण अटो नित्यत्वादिति भावः ॥ अत एवापरितोषात् असिद्धवदत्राभादिति समानाश्रये यणि कर्तव्ये अटोसिद्धत्वादियङेवोचित इत्याशयेन वा केचिदि-त्युक्तम्। लावस्थायामेवाडागम इति पक्षे तु यणेवेति बोध्यम् । ईकारोपीति॥ प्रयुञ्जते च न हि तरणिरुदीते दिक्पराधीनवृत्तिः इति ॥ व्याख्यात च म-नोरमायाम्। कर्मव्यतिहारे तङ् ॥ न च न गतिहिंसार्थेभ्य इति निषेधः श-ङ्क्यः। उत्पूर्वस्याविर्भावार्थत्वादिति ॥ अत्र वदन्ति। व्यतिशब्दं विना कर्मव्य-तिहारकल्पनं क्लेशावहम्। परकीयकर्म च कर्मव्यतिहारेपेक्ष्यते तच्चात्र नोपात्त-

विकल्पे पक्षे उवङ् ॥ गुणोऽपृक्ते ॥ नाभ्यस्तस्याचोत्यतः पिति सार्वधातुके इति उतो वृद्धिर्लुकि हलीत्यतो हलीति वर्तते। तदाह ॥ हलादावित्यादि ॥ ऊर्णोतेर्विभाषा ॥ सिचि वृद्धिरिति सूत्रं नेटीत्यत इटीति चानुवर्तत इत्याशयेनाह ॥ इडादावित्यादि ॥ स्तवोतीति। तुरुस्तुशम्यम इति इड्वा ॥ स्तुसुधूञ्भ्य इत्यत्र परस्मैपदेष्विल्युक्तेरात्मनेपदे तु नेट्। अस्तोष्ट। अस्तोषाताम् ॥ ब्रुवः पञ्चानाम्। विदो लटो वेत्यतो लटो वेति वर्तते। ब्रुव इत्येतदादिमं पञ्चस्यन्तम्, अन्तिमं तु षष्ठ्यन्तमित्याशयेनाह ॥ ब्रुवो लट इत्यादि ॥ चर्त्वमिति। प्रक्रियालाघवात् आहस्त इत्येव सुवचमित्याहुः ॥ ब्रुव ईट्॥ हलादेः किम्। ब्रवाणि॥ पितः किम्। ब्रूतः ॥ झलीति यत्वविधानादिति। ईडागमे कृते झलादित्वाभावादिति भावः॥ इण् गतौ ॥ इयङोऽपवाद इति। येन नाप्राप्तिन्यायेनेति भावः। गुणवृद्धी तु परत्वादस्य बाधिके। अयनम्। आयकः ॥ दीर्घ इणः किति ॥ अत्र लोपोभ्यासस्येत्यतोऽभ्यासस्य इत्यनुवर्तते, व्यथो लिटीत्यतो लिटीति च॥ किति किम्। इयाय। अत्र वदन्ति। इह दीर्घे कृतेपि अभ्यासस्यासवर्णे इतोयङा रूपसिद्धेः कितीति व्यर्थम्। न च दीर्घस्येयङि दीर्घविधानं व्यर्थमिति वाच्यम्। ईयुरित्यत्र वार्णादाङ्गं बलीय इति यणि कृते दीर्घविधेरावश्यकत्वात्। किं च लिटीत्यनुवर्तनमपीह व्यर्थमेव व्यावर्त्याभावादिति॥ एता। एष्यति। एतु। इतात् इताम्। यन्तु। इहि। उत्तमे तु अयानि। अयाव। अयाम। लङ्मध्यमे ऐः। ऐतम्। ऐत। उत्तमे तु आयम्। ऐव। ऐम ॥ ईयादिति। अकृत्सार्वेति दीर्घः॥ एतेर्लिङि॥ इह आर्द्धधातुक इति स्वरूपकथनार्थं प्रक्षिप्तम्। किति लिङीत्येतावतैवेष्टसिद्धेः ॥ उभयत आश्रय इति। अन्तादिशब्दौ अवयवविशेषवाचिनौ। तत्र यदि पूर्वस्य अवयवबुद्ध्या एकादेश आश्रीयते, तदा तस्यैव परस्य कथमादिवद्भावः। एवं परस्यादिवत्त्वे पूर्वस्यान्तवद्भावो न स्यादेकस्योभयापेक्षया पारतन्त्र्यविरोधादिति भावः ॥ नन्वेवं रामौ इत्यस्य सुप्तिङन्तमिति पदत्वं न स्यात्, परादित्वे रामेति प्रकृतेरभावात् यस्मात् प्रत्ययविधिस्तदादेस्तदन्तस्य ग्रहणमिति स्वीकाराद्राम इत्यस्य प्रकृतित्वात्। पूर्वान्तत्वे तु परत्र प्रत्ययाभावात् ॥ अत्राहुः। पूर्वं पदसंज्ञा पश्चादेकादेश इति नोक्तदोष.। इह च ज्ञापक सुपिसूतिसमा इति॥ विध्यादौ समीयादिति न भवत्येव। आशीर्लिङि तु अकृत्सार्वेति दीर्घे कृतेपि ह्रस्वत्वेन भाव्यमित्याशङ्क्याह ॥ भौवादिकस्येति। इटकिटकटी इत्यत्र प्रश्लिष्टस्य ईधातोराशीर्लिङि इदं रूपम्। वीगतीत्यत्र ईकारोपि धात्वन्तरं प्रश्लिष्यत इति मते तु विध्यादि-

दत्वेन दान्तत्वात्॥ श्नसोरल्लोपः ॥ अत उत् इति सूत्रादत इत्यनुवर्त्य अद्ग्रहणं त्यक्तुं शक्यमित्याहुः॥ श्नसोरिति। शकन्ध्वादित्वात् पररूपमित्याह ॥ श्नस्यास्ते-श्चेति। श्नस्योदाहरणम्। रुन्धन्तीत्यादि ॥ क्ङितीति किम्। रुणद्धि। अस्ति। तपरकरणमास्तामासन्नित्यत्र ह्याडागमे कृते तस्य लोपो मा भूत् इत्येतदर्थम्। निष्कर्षस्तु अनुपदं स्फुटीभविष्यति॥ घ्वसोरेद्धा॥ एत्वमल्लोन्त्यस्य लोपस्तु श्नित्त्वा-त्सर्वस्येति भाष्यादौ स्पष्टम्। देहि। धेहि॥ असिद्धवादाडिति। नन्वेवमाटो-ऽसिद्धत्वात् श्नसो' इत्याल्लोपो न भवेदिति तपरकरणं तत्र व्यर्थमिति चेद्॥ अ-त्राहुः। आभाच्छास्त्रस्यानित्यताज्ञापनाय तपरकरणम्। तेन देभतुरित्यादि सि-द्धमिति॥ स्यादेतत्। अत्र केचित्। अद्ग्रहणस्य निष्फलत्वे तपरकरणस्य ज्ञाप-नार्थत्वं न सिध्येत्। न च अत उत् इति सूत्रस्थतपरकरणमेव ज्ञापनार्थमस्त्विति वाच्यम्। अस्येत्युक्तौ गौरवादर्धमात्रालाघवाय तत्र तपरत्वमिति सुवचत्वात्। तस्मादुक्तज्ञापनार्थमद्ग्रहणमावश्यकमित्याहु'॥ उपसर्गप्रादुर्भ्यां॥ प्रादुसश्चेति॥ प्रादुस् इति सान्तमव्ययम्। प्रादुषश्च इति पाठे प्रादुर्भ्याम् इति निर्देशो न युज्य-ते इति प्राचां षान्तपाठः प्रामादिकः॥ परस्येति। अयमस्तेः सस्य विशेषणं न त्वस्तेः, तेन प्रादुरस्तीत्यत्र न षत्वम्॥ उपसर्गेत्यादि किम्। दधि स्यात्॥ अस्तेः किम्। परिसृजति॥ मृजू शुद्धौ। अय न षिद् भिदादिपाठसामर्थ्यात्॥ मृजेर्वृ-द्धिः॥ गुणापवादः। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम् इत्याह॥ धातु-प्रत्यये इति॥ धातुप्रत्यये किम्। कंसपरिमृड्भ्याम्॥ क्ङित्यजादाविति। एतच्चा-न्येषां वैयाकरणानां मतमिको गुणवृद्धी इति सूत्रे भाष्यकृता स्वीकृतम्॥ मृ-ड्ढीति। हुझल्भ्य इति हेर्धिः। षत्वष्टुत्वजश्त्वानि॥ वलादेः सार्वधातुकस्येति। वलादेः किम्। रुदन्ति॥ सार्वधातुके किम्। स्वप्ता॥ धित्व नेति। सकृद्गतौ इ-ति न्यायात्। हेर्धिरिति स्थान्यादेशयोरिकार उच्चारणार्थ इत्यादिप्रागुक्तसमाधा-नादेति भावः॥ रुदश्च॥ पञ्चभ्यः किम्। जागर्तेर्लङि अजागः॥ प्रकृतिप्रत्ययेत्या-दि। हलादिपित्सार्वधातुकापृक्तापेक्षत्वाच्च बहिरङ्गत्वमडीटोः॥ अरुददिति। इरितो वा इत्यङ्॥ अरोदीदिति। अस्तिसिचः इतीट्। रुदश्च इत्यनेन तु न सिचा व्यवधानेन रुदादेः परत्वाभावात्॥ सुषुपतुरिति। वचिस्वपि इति सम्प्रसारणम्। ततो द्वित्वम्॥ सुपिसूतिसमा इति॥ सूतीति क्तिन्नन्तः। समेति। पचाद्यजन्तः॥ सुषुप्तिः। सुषूतिः। सुषमा। विषमः। अद्विर्वचन इति॥ तेन षत्वसञ्ज्ञितस्य द्वित्वम्। सुपिरूपाभावादिति। एकदेशविकृतमनन्यवत् इति तु न प्रवर्तते। तस्य स्थानि वत् सूत्रशेषत्वात्। षत्वस्य त्रैपादिकत्वेन तत्कार्यं प्रति स्थानिवद्भावाभावाद-

त्याहुः ॥ वस्तुतस्तु स्थानिवदादेश इत्येतं प्रति चिपादौ सिद्धेत्युक्तम् । तस्मादिह समाधानान्तरमूह्यमित्यन्ये ॥ अनितेः ॥ उपसर्गादसमासेपीत्यत उपसर्गादिति वर्तते रषाभ्याम् इत्यतो नो ण इति तदाह ॥ उपसर्गस्थादित्यादि ॥ अन्तापवाद इति । झोन्तः इत्यस्य अदादेशोऽपवादः । अस्य त्वपवादो जुश्चिति ज्ञेयः ॥ बभ्रामेति । अचन् क्रीडन् रममाण इत्युपनिषदि जक्षादित्वस्य निर्विवादत्वात् । नाभ्यस्ताच्छतुः इति निषेधेन जक्षन् इति नुमश्छान्दसत्वेपि जक्षादित्वस्य तत्कल्पनाया अन्याय्यत्वात् । धातुवृत्त्यादौ जक्षादिपाठाच्च ॥ जाग्रोऽविचिण्णल् ॥ ङिद्भ्योन्यस्मिन्निति । जागृविः । विशब्देन वादिप्रत्ययो गृह्यते, इकारस्तु उच्चारणार्थः इति वदतां मते क्वसावपि न भवति । जजागृवान् । जजागृवांसौ ॥ चिण् अजागारि ॥ णल् । जजागार ॥ ङित् । जागृतः । जागृथः ॥ वृद्धिविषये इति । ण्वुलि । जागरकः । घञि । जागरः । णिचि । जागरयति । न चैतेषु गुणे कृतेपि अत उपधायाः इति वृद्धिः स्यात् इति वाच्यम् । गुणविधेश्चिण्णल्प्रतिषेधस्य चाऽनर्थक्यापत्तेः ॥ जुसि च ॥ चकारः स्पष्टप्रतिपत्त्यर्थः । क्सस्याचि इत्यतोऽचीत्यनुवर्तत इत्याह । अजादाविति ॥ जागृयुरिति । एवं शृणुयुः चिनुयुरित्यादावपि गुणो नेति बोध्यम् । यासुटो ङित्त्वात् शृणुयुरित्यादौ गुणो न इति प्राचामुक्तिस्तु मनोरमायां दूषिता । जुसि च इति गुणस्य निषेधापवादत्वादिति ॥ केचित्तु जुसि च इत्यत्र उसीत्यावर्त्य उस्रूपे जुसीति व्याख्यानान्नोक्तदोष इत्याहुः ॥ अजादौ जुसीति समाधानं तु भाष्यारूढम् । जागर्तेः सिच इटि कृते यणादिप्राप्तिक्रमं दर्शयति । जागृ इस् इत्यचेति ॥ तत्र कृते इति । हलन्तलक्षणाया वृद्धेर्जागर्तिगुणेन बाधस्तेन हलन्तत्वसंपादनात् । या हि गुणवृत्तिसमये वृद्धिः, सा बाध्यते नान्येति भावः । अजागरिष्ट । अजागरीरित्यादि ॥ दरिद्रा ॥ इद्दरिद्रस्य ॥ इद्दरिद्रः इति वक्तुमुचितम् ॥ श्नाभ्यस्त । क्रीणन्ति । क्रीणते । पुनन्ति पुनते । दधति । दधते ॥ क्ङितीति किम् । क्रीणाति । पुनाति । दधाति ॥ अतः किम् । बिभ्रति ॥ श्नो इत्येव सिद्धे इति । प्रथमत्यागे मानाभावादिति भावः ॥ निर्मूलमेवेति ॥ यत्तु व्याख्यातृभिः समर्थ्यते आमोऽभावे आतो लोपे कृते आदन्तत्वाभावादौत्त्वं नेति ॥ तन्न । आत औ णलः इत्यत्र प्राथम्यादोकारे कर्तव्ये औकारविधानं दरिद्रातेराल्लोपेपि श्रवणार्थं सत् आमभावे लिङ्गमिति हरदत्तमाधवादिग्रन्थैः स्वग्रन्थेन च विरोधात्, तत्कथमौत्त्वस्याप्रवृत्तिर्भवेत् । यदप्युक्तम् । ओकारौकारयोर्द्विमात्रत्वाविशेषादौकारविधानमिति ॥ तदपि स्थवीयः । तस्मिन् पक्षे आमो दुर्वारत्वप्रसङ्गात् । विवक्षित इति । तेन दरिद्रातीति दरिद्र इति प-

चाप्यजेव भवति। परसप्तम्यां तु श्नाभ्यस्तयोरात इत्यादन्तलक्षणो णः स्यात्। सति तु तस्मिन् आतो युक् चिण्कृतोरिति युकि दरिद्राय इति स्यादिति भावः। सनि ण्वुलीति। एतेष्वालोपो नेत्यर्थः। दिदरिद्रासति। दरिद्रायकः। दरिद्राणम्॥ अदरिद्रुरिति। सिजभ्यस्त इति झेर्जुस् लङः शाकटायनस्यैव इत्यादन्तलक्षणो विकल्पस्तु न भवति परत्वात् श्नाभ्यस्तयोः इत्याल्लोपे अकारान्तस्यैवाभावात्। ई हल्यघोः इत्यात ईत्वमिह न प्रवृत्तमेव झेर्जुसि हलादिपरत्वाभावादिति भावः॥ ननु दरिद्रा झि इति स्थिते जुसः प्रागेव आल्लोपात् परत्वादपवादत्वाच्च ईत्वं स्यात्॥ मैवम्। अकृतव्यूहपरिभाषाया जागरूकत्वाद् ईत्वनिमित्तं हलादित्वं तच्च विनाशोन्मुखं जुसो भावित्वात्॥ भस्य अदिति। अदभ्यस्तात् इत्यनेन॥ तिप्यनस्तेः॥ पदान्तस्य किम्। चकास्ति॥ सस्येति किम्। वष्टेर्लङि तिपि अवट्॥ तिपि किम्। क्विपि चकाः॥ अनस्तेः किम्। सर्वमा इदम्। आ इति लङि तिपि अस्ते रूपम् बहुलं छन्दसि इति ईट् न॥ शास इदङ्हलोः॥ अङि। अशिषत्। अशिषताम्। क्ङिति। शिष्टः। शिष्टवान् शिष्यात्। शिष्यास्ताम्। अङ्साहचर्यात् परस्मैपद एवेत्त्वम्। नेह। आशास्ते॥ अन्ये तु यस्मात् शासेरङ् संभवति तस्यैवेत्वमिति व्याख्याय व्यतिशिष्टे व्यतिशिड्ढ्वे इत्यात्मनेपदेपि इत्त्वं स्वीकुर्वन्ति॥ शाहौ॥ पूर्वसूत्रे उपधापदान्वयानुरोधेन शासः इत्यवयवषष्ठ्यपि इह स्थानषष्ठ्येव, उपधायाः इत्यस्य निवृत्तत्वादित्याह॥ शास्तेः शादेश इति। धि च इति सलोपेन शाधीति रूपे सिद्धेपि सलोपस्यासिद्धत्वात् शास इदिति इत्त्वं स्यात्। तद्वारणाय शाविधानमित्याहुः॥ योर्वर्णयोः॥ य्योरित्युक्तेऽपीष्टसिद्धौ यकारेकारयोरिति स्फुटप्रतिपत्तिर्न स्यादिति वर्णग्रहणं कृतम्। यिश्च इवर्णश्च यीवर्णौ तयोः। यिश्चेतीकार उच्चारणार्थो न तु विवक्षितस्तदाह॥ यकारे इवर्णे चेति। यिवर्णयोरिति पाठस्तूचितः॥ लोपं बाधित्वेति। लोपस्य तु उदाहरणम् आदीध्य गतः। आवेव्य गतः। दीधिता। दीधिष्यते। वेविता। वेविष्यते॥ यीवर्णयोरिति किम्। आदीध्यनम्। आवेव्यनम्॥ षस। अवदिति। तिप्यनस्ते इति दत्वम्॥ षस इति। सिपि धातो इति रुर्वा। पक्षे दः। सस्तीति। इदित्त्वान्नुमि सन्सतृति इति स्थिते स्को इति सलोपे झरो झरि सवर्णे इति तकारस्य वा लोपः॥ संस्ति, संस्त इति। इहापि पूर्ववत्तलोपो वा बोध्यः॥ वश कान्तौ। भाषायामप्यस्य प्रयोगो दृश्यते। वष्टि भागुरिरल्लोपम् जयाय सेनान्यमुशंति देवा इति॥ चर्करीतं च॥ गणसूत्रमिदम्। चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्याणां संज्ञा॥ अदादौ बोध्य-

मिति। तेन यङ्लुगन्तेषु अदिप्रभृतिभ्य इति शपो लुग्भवतीति भावः॥ प्राचा तु चर्करीतमिति यङ्लुगन्तं परस्मैपदमित्युक्तम्। तच्चेहाप्रकृतत्वादुपेक्षितम्॥

इत्यदादयः॥

हु दाना॥ यद्यपि स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वोत्पादानमेव दानं, तथापि प्रयोगमनुसृत्य व्याचष्टे। प्रक्षेप इति॥ वैध इति। आहवनीयादौ॥ हविष इति। विधिबोधितद्रव्यस्येत्यर्थः॥ स्वभावादिति। तेन आहवनीये पुरोडाशे प्रक्षेप्तव्ये प्रमादेन कोपेन वा पाषाणः प्रक्षिप्तः पुरोडाशो वा गर्तादौ स तु प्रक्षेपो न होम इति ज्ञेयम्॥ परस्मैपदिन इति। तेन होथ इति केषांचित् प्रयोगोऽसाधुरेव। स्मराग्नौ जुह्वाना इत्यानन्दलहरीप्रयोगस्तु साधुरेव। शानचोऽप्रवृत्तावपि चानशन्तत्वात्॥ आटीति। आडुत्तमस्येत्यनेन॥ परत्वादिति। हुश्नुवोरिति यणपेक्षया परत्वादित्यर्थः॥ भियोऽन्यतरस्याम्। सार्वधातुके किम्। भीयते। बेभीयते॥ हलादौ किम्। बिभ्यति॥ क्ङितीति किम्। बिभेति। केचिदत्र हलादौ क्ङितीत्येतन्नातीवोपयुज्यते। इत्त्वविधानस्य बिभित इत्यादौ चरितार्थत्वात्। बिभ्यति, बिभेतीत्यादौ यणादेः प्रवृत्तिसंभवादित्याहुः॥ अर्तिपिपर्त्योश्च॥ अर्तेरुदाहरणमियर्तीति वक्ष्यति॥ उदोष्ठ्य॥ अङ्गावयवेति किम्। ॠ गतौ क्र्यादिः, तस्मात् क्तप्रत्यये श्र्युकः किर्तीति इण्निषेधात् समीर्णं इति भवति। अन्यथा तु समूर्ण इति स्यात्॥ शॄदॄप्राम्। शॄ हिंसायाम्। दॄ विदारणे। इमौ क्र्यादौ॥ पक्षे गुण इति। ॠच्छत्यॄतामित्यनेन॥ पप्रतुरिति। ह्रस्वपक्षे यण्॥ ननु ह्रस्वग्रहणमिह मास्तु, गुणानुवृत्त्या तस्यैव विकल्पोऽस्तु। तथा च यणादेशेन पप्रतुः शश्रतुरित्यादि सिध्यत्येव। गुणपक्षे तु पपरतुः शशरतुरित्याद्यपि सिध्यतीति चेत्। मैवम्। गुणाभावपक्षे ॠत इद्धातोरिति इत्त्वप्रसङ्गात्। न चान्तरङ्गत्वाद्यणेव स्यादु इति वाच्यम्। वार्णादाङ्गस्य बलीयस्त्वात्॥ डुभृञ्। ड्वितः क्त्रिः भृत्रिमम्॥ भृञामित्॥ निजां त्रयाणामित्यतोऽनुवर्तनादाह। एषां त्रयाणामिति। केचित्तु कपिञ्जलाधिकरणन्यायेन त्रयाणामिति लभ्यत इत्याहुः॥ त्रयाणां किम्। जहाति॥ श्लौ किम्॥ बभार॥ ई हल्यघोः॥ आभ्यस्तयोरिति। लुनीते॥ क्ङितीति किम्। लुनाति॥ अघोः किम्। धत्तः। दत्तः॥ मिमीते इति। घुमास्था इतीत्त्वमिह न प्रवर्तते, तत्रार्धधातुक इत्यनुवृत्तेः। अन्यथा मातः माथः। गाते। गासे इत्यादावतिप्रसङ्गात्। अत एव काशिकायामुक्तम् आर्धधातुक इत्यधि-

कारे न स्यपि इति योगं यावद् इति ॥ जहातेश्च ॥ क्ङितीति किम्। जहा-ति ॥ सार्वधातुके किम्। हीयते ॥ चादिदौ ताविति। अत एव भट्टिः प्रायुङ्क्त जहिहि जहीहि रामभार्याम् इति ॥ लोपो यि। सार्वेति किम्। हेयात् ॥ प्र-णिददातीति। नेर्गद इति णत्वम् ॥ दत्त इति। श्नाभ्यस्तयोः इत्यालोपः। अघो दित्युक्तत्वात् ईत्त्वं तु न ॥ अदादिति। गातिस्था इति सिचो लुक् ॥ दधस्तथो-श्च ॥ दध इति कृतद्विर्वचनाभ्यासकार्यो धाञेव गृह्यते, न तु दध धारणे इत्यय-मिति व्याचष्टे ॥ द्विरुक्तस्येति । झषन्तस्य किम्। दधाति ॥ नन्वेव धत्त इत्या-दावपि न स्यादल्लोपस्य स्थानिवत्त्वेनाझषन्तत्वादत आह ॥ वचनसामर्थ्यादिति ॥ निजाम् ॥ श्लाविति किम्। निनेज ॥ नाभ्यस्तस्य ॥ अभ्यस्तस्य किम्। देषाणि ॥ अचि किम् । देदेष्टि। पिद्ग्रहणम् उतो वृद्धिर्लुकि हलि इत्युत्तरार्थम्॥ सा-र्वेति किम् । निनेज ॥ बहुलं छन्दसि ॥ इतीत्वमिति। एतच्च पूर्वोक्तान्वयि ॥ इयर्तीति। अभ्यासस्येयङ्। अभ्यासादुत्तरस्य तु गुणः। इयूरतीति । अदभ्यस्ता त् इत्यत् ॥ अर्यादिति। गुणोर्तीति गुणः ॥ आरदिति । सर्तिशास्ति इत्यङि ऋदृशोऽङि इति गुणः ॥ बभ्र इति। तसस्तकारस्य झषस्तथोः इति धत्वम् ॥ तुतूर्त इति। हलि चेति दीर्घः ॥ धन धान्ये । धान्यार्जन इत्यर्थः ॥ दधन्त इति। छान्दसत्वात् अनुनासिकस्येति नेह दीर्घ इत्याहुः ॥ जनसनखनाम्। जन जनने जनी प्रादुर्भाव इत्युभयोरपि ग्रहणम् । झलादौ सनि सिषासति। जज्ञतीति । गमहनेत्युपधालोपः । जायादिति । ये विभाषेति वा आत्त्वम् । एवं जायादित्यत्रापि ॥ जिगातीति । बहुलं छन्दसीति इत्त्वम् ॥

इति जुहोत्यादिः ॥

दिवु क्रीडा। उदित्करणं क्त्वायामिड्विकल्पार्थं निष्ठायामनिडर्थं च । देवित्वा। द्युत्वा । द्यूतम्। क्रीडायां दीव्यन्ति माणवकाः। विजिगीषायां शत्रुं दीव्यति। विजिगीषते इत्यर्थः । कान्तिरिच्छा, द्युतेः पृथग्ग्रहणात् ॥ षिवु ॥ परिषिषेवेति। स्थादिष्वेवाभ्यासस्येति नियमो नेह प्रवर्तते । तत्र प्राक् सितात् इत्यनुवृत्तेः। अस्य चाप्राक्सितीयत्वात् । तेनाभ्यासस्य षत्वं परिनिविभ्य इत्यने-न भवत्येव ॥ न्यषेवीदिति। सिवादीनां वा इति विकल्पः ॥ नृती। ईदित्करणं श्वीदितः इति निष्ठायामिण्निषेधार्थम् । यद्यपि सेऽसिचि इति इटो विकल्पि-तत्वाद् यस्य विभाषा इत्यनेनैवेष्टं सिध्यति । तथापि यस्य विभाषा इत्यस्य अ-नित्यत्वज्ञापनार्थमीदित्करणम्। तेन धावितमिभराजधिया इत्यादि सिद्धम् ॥ से-

ऽसिचि ॥ नर्तिष्यति । नर्त्स्यतीति । निनर्तिषति । निनृत्सति । कर्तिष्यति । कर्त्स्यति । चिकर्तिषति । चिकृत्सति इत्यादि ज्ञेयम् ॥ अनर्तीदिति । असिचि इत्युक्तत्वादिड्वदित्यमिट् ॥ जेसतुरिति । वा जॄभ्रमुत्रसाम् इत्येत्त्वाभ्यासलोपौ ॥ क्नुथ । पूतीभावः पवित्रभवनं वा । क्नुथ्यति भूमिः । पवित्रीभवतीत्यर्थः ॥ पुष्प विकसने । कालात्साधुपुष्प्यत् इति शत्रन्तः । पचाद्यचि पुष्पम् । संज्ञायां कन् । पुष्पकम् ॥ व्रीड । गुरोश्च हलः इत्यप्रत्यये टाप् व्रीडा । घञि तु व्रीडः । अत एव व्रीडमावहति मे स सम्प्रति इति कालिदासः । व्रीडादिवाभ्यासगतैर्विलिल्ये इति माघश्च ॥ षह षुह । परिनिविभ्यः इत्यत्र सहेत्यकार उच्चारणार्थः इति षत्वमिह भवति ॥ परिषह्यति । तीषसह इतीड्विकल्पस्तु नास्य भवति । सह इति शबन्तनिर्देशात्, किं तु षह मर्षणे इत्यस्यैव स इत्यात्रेयादयः ॥ सहेति निर्देशस्योभयत्र तुल्यत्वे तीषसह इत्यत्र शपा निर्देशः । परिनिविभ्यः इत्यत्र तु नेत्यर्धजरतीयमिदं हेयमेव ॥ तत्त्वं तु प्रयोगमनुसृत्य महद्भिरेव निर्धार्यम् ॥ नपुंसके भावे क्तः सुहित तृप्तिः । अत एव पूरणगुण इति सूत्रे सुहितार्थास्तृप्त्यर्थाः इति व्याख्यातम् ॥ जेरतुरिति । ऋच्छत्यॄताम् इति गुणे कृते न शस इति गुणशब्देन भावितस्य निषेधात् अत एकहल्मध्ये इत्यप्रवृत्तौ वा जॄभ्रमुत्रसाम् इत्येत्त्वाभ्यासलोपविकल्पः ॥ षूङ् । प्रसव उत्पत्तिः । मृत्पिण्डो घट सूयते इत्यादिप्रयोगाभावात् प्राणीत्युक्तम् ॥ स्वादय ओदितः इति वक्ष्यमाणत्वात् ओदितश्च इति निष्ठातस्य नत्वं प्रसूनम् ॥ विकल्पमिति । परमपीति शेषः ॥ निषेधे प्राप्त इति । पुरस्तात् प्रतिषेधकाण्डारम्भसामर्थ्यादिति भावः ॥ दीङो ॥ पञ्चमीत्यभिप्रायेण व्याचष्टे ॥ परस्येति । ङःसि इत्यत्रैव उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् इति सप्तम्याः षष्ठीकल्पनम् ॥ अचि किम् । देदीयते ॥ क्ङितीति किम् । उपादानम् ॥ आभीयत्वेनासिद्धत्वमाशङ्क्याह ॥ वुग्युटाविति ॥ दिदीये इति । परमपि यण बाधित्वा नित्यत्वादादौ युट् । सति तु यणि ईकारस्य श्रवण न स्यादिति युटः सिद्धत्वमुक्तम् ॥ मीनातीति ॥ मीञ् हिंसायाम् । डुमिञ् प्रक्षेपणे । प्रमाय उपदाय । प्रमातव्यम् । उपदातव्यम् ॥ एज्निमित्त इति । विषयसप्तमी । तेन आदावात्त्व पश्चात् घञ् । आतो युक् इति युक् । उपदाय इति सिध्यति । अन्यथा एरचि कृते आत्त्वे उपदाः इति स्यात् ॥ अदास्तेति । दीङः प्रतिषेधः स्थाघ्वोरिच्च इति न घुत्वमित्यदितेति रूप न भवतीत्येके ॥ अन्ये तु स्थाघ्वोरिच्च इत्येतत्, न भवति दीङोऽनुकरणे दारूपासम्भवेन अघुत्वात् । अत एव प्रनिदातेत्यादौ नेर्गद इति णत्वमपि न भवति इत्याहुः ॥ अथ भावः दो अवखण्डने इत्यादेर्दारूपत्वं संभवति ।

आदेच उपदेशे इत्यस्य अनैमित्तिकत्वात्। दीङस्तु एज्निमित्तप्रत्ययविषये आत्त्वं दादित्यनुकरणे एजनिमित्तस्याभावित्वान्न घुत्वम्। एवं च घुप्रकृतित्वमपि नास्तीति णत्वस्याप्रसक्तिरिति॥ डीङ्। डीनः। डीनवान्। स्वादिषु पाठसामर्थ्यान्निष्ठायामिण्न। इटि हि सति व्यवधानाद् ओदितश्च इति नत्वं न स्यादिति। स्वादिषु पाठसामर्थ्यादिड्व्यवधानेऽपि णत्वमस्त्विति न शङ्क्यमिष्टानुरोधात्॥ डयित इति प्रयोगस्तु भौवादिकस्य। निष्ठा शीङ् इत्यत्र निष्ठेति योगविभागादकित्त्वे गुण इत्याहुः॥ मीङ् हिंसायाम्। मीञ् इति क्र्यादौ। प्राणवियोग इति। मीयते प्राणैर्वियुज्यत इत्यर्थः॥ लीङ्। ली श्लेषणे इति क्र्यादौ॥ यकेति॥ सार्वधातुके यक् इति विहितेन॥ न तु श्यनेति। अन्यथा लीङ् इत्येव ब्रूयाद् इति भावः॥ यका निर्देशस्य फलमाह॥ लीलीङोरिति॥ ल्यपि। विलाय। विलीय॥ व्रीङ्॥ वृणोत्यर्थो वरणम्। वृञ् वरणे इति स्वादौ पठिष्यमाणत्वात्। वरणे इति वक्तव्ये वृणोत्यर्थे इति वचनं वैचित्र्यार्थम्। व्री वरणे इति क्र्यादौ॥ माङ्॥ मायत इति। घुमास्था इतीत्त्वं तु न। तत्रार्द्धधातुक इत्यधिकारात्॥ षो न्त। अन्तकर्म नाशनम्॥ राघवस्य शरैर्बाणैर्घोर रावणमाहवे इति। राघवेति संबुद्ध्यन्तम्। स्येति लोण्मध्यमैकवचनम्॥ अभिष्यतीति। उपसर्गात्सुनोति इति षत्वम्॥ अभ्यष्यदिति। प्राक् सितादड्व्यवायेऽपि इति षत्वम्॥ अभिससाविति। स्थादिषु इति नियमान्न षत्वम्॥ दो अवखण्डने। अवेत्युपसर्गप्रयोगो वैचित्र्यार्थः। खण्डने इत्येतावत्युक्तेऽपि इष्टसिद्धेः॥ प्रणिदातेति। नेर्गद इति णत्वम्॥ देयादिति। एर्लिङि इत्येत्वम्॥ अदादिति। गातिस्था इति सिचो लुक्॥ ज्ञाजनोर्जा॥ जानाति॥ शितीति किम्। ज्ञाता। ज इति ह्रस्वोच्चारणेऽपि अतो दीर्घो यञि इति दीर्घे सिद्धे जाग्रहणमङ्गवृत्तपरिभाषाज्ञापनार्थम्। तेन पाधातोः पिबादेशे कृते गुणो न भवति॥ पिबादेशस्यादन्तत्वाश्रयणं तूपायान्तरमित्याहुः॥ ञिति णिति कृति चेति। ञिति कृत्युदाहरणं घञि जनः। णिति कृति तु जनकः। जनयतीत्यत्र उपधावृद्धौ सत्यां जनीजॄष् इति मित्त्वात् मितां ह्रस्वः॥ दीपी दीप्तौ। ईदित्त्वान्निष्ठायामिण्न। दीप्तः। एवं पूरीत्यादेरीदित्त्वात्पूर्ण इत्यादि ज्ञेयम्॥ केचित्त्विति। तेषां मते ऐश्वर्ये तप्यत इत्येव प्रयोगो न तु तपतीति॥ न्यविक्षतेति। निपूर्वाद्विशतेर्लुङि शल इगुपधा इति क्सः। नेर्विशः इति तङ्॥ वाशृ शब्दे। मन्दिवाशि इत्युरच्। वाशुरा रात्रिः॥ तितिक्षायामिति। गुप्तिज्किद्भ्यः इति सन्। तत्र हि तिजेः क्षमायामित्युक्तम्॥ ईशुचिर्। ईदित्त्वान्नेट् शुक्तम्। क्लिन्नमित्यर्थः॥ नन्द्धेति। नहो धः इति धत्वम्॥

चिण् ते पदः ॥ तशब्द इति । सामर्थ्यादात्मनेपदप्रथमपुरुषैकवचनम् ॥ तशब्दे किम् । अपत्याः ॥ प्रश्नपादीति ॥ चिणो लुक् इति तशब्दस्य लुक् । नेर्गद इति णत्वम् । अबोधीति । दीपजनबुध इति चिण् ॥ अनो रुध कामे । अनोः परो रुधधातुः कामे । काम इच्छा । दिवादिषु पाठसामर्थ्यात् रुधादिभ्यः इति श्नमं बाधित्वा श्यन् ॥ नाप्यमिति । सृजिदृशोर्झल्यमकिति इत्यकित्येव विधानात् ॥ लिश । आतपादिनानल्पस्य अल्पभावोऽल्पीभावः ॥ लिच्छीष्टेति । लिङ्सिचावात्मनेपदेषु इति किच्वान्न गुणः ॥ अलिच्चतेति । शल इगु पधेति क्सः ॥ राधोऽकर्मकात् । भिन्नक्रम दर्शयति । अकर्मकादेवेति । राधो वृद्धावेव श्यन्निति व्याख्यायामकर्मकादिति विशेषणं व्यर्थं स्यात्, वृद्धावस्याकर्मकत्वात् । अकर्मकात् किम् । शत्रुमपराध्नोति हिनस्तीत्यर्थः । राध संसिद्धौ इति स्वादौ । राधो हिंसायामित्यनुवादाद्धिंसायामपि श्यन् ॥ उदाहरणमाहेति । अकर्मकत्वप्रयोजकस्य कस्यचिदर्थस्येति भावः । अकर्मके श्यन्नन्तस्य प्रयोगान् दर्शयति ॥ यन्मह्यमित्यादिना ॥ कृष्णायेति । राधीक्ष्योरिति चतुर्थी ॥ अपुषदिति । ङित्वाद् गुणाभावः ॥ शुष । शोष्टा । शोक्ष्यति ॥ श्लिष आलिङ्गन इति सूत्रं योगविभागेन व्याचष्टे ॥ श्लिष इति । अनिटश्च्लेः क्स इति । एतच्च च्लेः सिच् शल इगुपधात् इत्यतोऽनुवर्तते इति भावः ॥ अनिटः किम् । श्लिषु दाह इति भौवादिकस्य सेटो माभूत् । अश्लेषीत् । शल इगुपेति सिद्धे पुनः क्सविधेः फलमाह ॥ पुषाद्यङ इति ॥ सामर्थ्यादिति । यदि हि श्लिष इति प्राप्त एव क्सो नियम्येत, तर्हि योगविभागो व्यर्थः स्यादिति भावः ॥ शल इगुपधादित्यस्यापीति । तेन कर्मख्यातामप्रभृतिष्वनालिङ्गने सिजेव भवति न तु क्सः । समाश्लिक्षत जन्तूनि काष्ठैरिति क्सप्रत्यये सति तु समाश्लिक्षन्तेति स्यादिति भावः । प्रत्यासत्ताविति । आलिङ्गन हि प्राणिकर्तृक न तु काष्ठादिकर्तृकमिति भावः ॥ श्लिष च्लेरालिङ्गन एव क्स इति व्याख्यानफलं दर्शयति ॥ कर्मणीत्यादिना । अश्लिक्षातामित्यादौ यद्यपि क्ससिचोर्विशेषो नास्ति क्सस्याचीत्यकारलोपात् तथापि थासादावस्त्येव विशेष इति ध्वनयन्नुदाहरति ॥ अश्लिष्ठाः । अश्लिड्ढ्वमिति ॥ न्यासकारादय इति । तथा च तन्मते ञीतः क्त इति वर्तमाने क्तो भवति । आदित्वान्निष्ठायां नेट् । क्ष्विन्नः । विभाषा भावादिकर्मणोः । क्ष्विन्नम् । क्ष्वेदितमित्यादि ॥ षिधु । सराद्धिर्निष्पत्तिः । उदितो वेति क्त्वायामिड्विकल्पः । इट्पक्षे रलो व्युपधात् इति वा किच्वम् । सिधित्वा । सेधित्वा सिद्ध्वा ॥ प्रामादिक इति । ऊदित्त्वे त्वनुदात्तेषु सिध्यतेः पाठो व्यर्थः

स्यादिति भावः ॥ रधादिभ्यश्च । स्वरतिसूतीत्यतो वेत्यनुवर्तते । योगविभागो वैचित्र्यार्थः । गणनिर्देशाद्यङ्लुकि ररधितेत्येव, न तु ररद्धेति ॥ नेटय्लिटि ॥ इटीति किम् । रन्धकः ॥ अलिटीति किम् । ररन्धिव । नुमि कृते संयोगात् परत्वेनाकित्त्वान्नलोपो न ॥ नंष्टेति । नशेर्वेति कुत्वमिह न शङ्क्यम् । पदान्त एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्येत् ॥ प्रणश्यतीति । उपसर्गादसमासेपीति णत्वम् ॥ नशेः ॥ न भाभूपूकमिगमीत्यतो नेत्यनुवर्तते तदाह ॥ णत्वं न स्यादिति । षस्येत्युक्तेपि पदस्येत्यस्य विशेषणेन षान्तस्येति लाभादन्तग्रहणं व्यर्थं सत् ज्ञापयतीत्याह ॥ भूतपूर्वेति ॥ काष्ठानामिति । करणस्य शेषत्वविवक्षायां षष्ठी ॥ तत्रप्थेति । अनुदात्तस्य चर्दुपधस्येति विकल्पेन अमागमः ॥ रधादय इति । रधनशतृपदृपद्रुहमुहष्णुहष्णिह इत्यर्थः ॥ शमु । उदित्त्वात्क्त्वायां वेट् । शमित्वा । शान्त्वा । यस्य विभाषेति निष्ठायामनिट् । शान्तः । क्रमु अनवस्थाने ॥ शेषमिति । श्यनि दीर्घो, लुङि अङ् च विशेष उक्तस्ततोऽन्यदित्यर्थः ॥ चक्रमेति । म्वोश्चेति मस्य नत्वे कृते णत्वम् ॥ शमादिपाठ इति । शमित्यष्टाभ्यो घिनुण् ॥ शमादय इति । शम्तम्दम्श्रम्भ्रम्क्षम्क्लम्मद इत्यर्थः ॥ यसोऽनुप ॥ अत्र वदन्ति । यस इत्येवास्तु । ततः समः, नियमार्थमिदम् । सोपसर्गाच्चेत् संपूर्वकादेवेति । एवं च पूर्वसूत्रे अनुपसर्गादिति ग्रहणम् । उत्तरत्र च यसश्चेति ग्रहणं त्यक्तुं शक्यमिति ॥ दाहे पठित इति । अस्मिन्नेव गणे पठित इत्यर्थः ॥ अडर्थमिति । दाहे पठितस्य तु सिजेव । अव्योषीत् ॥

इति दिवादयः ॥

षुञ् ॥ सुन्व इति । लोपश्चास्येत्युकारस्य वा लोपः । सुनवानीति । आडुत्तमस्येत्याटि कृते हुश्नुवोरिति यण बाधित्वा परत्वाद् गुणः ॥ सुनोतेः स्यसनोः ॥ न रपरेत्यस्मान्नेत्यनुवर्तनादाह ॥ षो न स्यादिति । सनि तु अभिसुसूः । सन्नन्तादस्मात् क्विप्यतो लोपे रुत्वे दीर्घः । सुसूषतीत्येतत्तु नोदाहरणम् । स्तौतिण्योरेव षणीति नियमेनैव षत्वाभावसिद्धेः । एतच्च काशिकायां स्पष्टम् ॥ चिञ् । चयनं रचनाविशेषः ॥ विभाषा चेः ॥ चजोरिति सूत्रात्कुरित्यनुवर्तते सन्लिटोर्जेरित्यतः सन्लिटोरिति च । सन्युदाहरणं चिकीषति । चिचीषति ॥ ऋतश्च संयोगादेः ॥ इट् सनि वेत्यत इट् वेत्यनुवर्तते, लिङ्सिचोरिति सूत्रादात्मनेपदेष्विति च, तदाह ॥ इड् वा स्यात्तङीति ॥ तङि किम् । अस्तार्षीत् ॥ बभूथाततन्थ ॥ भूधातोस्तनोतेश्च थलि इड-

भावो निपात्यते । त्वं हि होता प्रथमो बभूथ । येनान्तरिक्षमुर्वा ततन्थ । भाषायां तु बभूविथ । तेनिथ । जगृभ्माते दक्षिणमिन्द्र हस्तम् । भाषायां जगृहिम । वृणोतेस्थलि क्रादिसूत्रेण इण्निषेधे सिद्धेऽपि निगम एव निषेधो नान्यत्रेति नियमार्थं ववर्थग्रहणम् । ववर्थ त्वं हि ज्योतिषाम् । भाषायां ववरिथ । ववृषे ॥ लिङ्सिचोः ॥ वृत इत्यनुवर्तते ॥ आत्मनेपदेषु किम् । अवारीत् । अवारिषुः । सिचि च परस्मैपदेष्विति निषेधादिह वृतो वेति न दीर्घः ॥ हिनुमीना ॥ प्रमीणाति ॥ हेरचङि ॥ जेघीयते ॥ अचङीति किम् । अजीहयत् । इह ण्यन्तस्य धात्वन्तरत्वात् केवलस्य त्वभ्यामनिमित्तप्रत्ययपरत्वाभावात् कुत्वप्राप्तिरेव नास्तीति अचङीति निषेधो व्यर्थः सन् ज्ञापयति । ण्यधिकस्यापि कुत्वं भवतीति । तेन जिघापयिषतीत्यादि सिद्धम् ॥ आप्नुहीति । सयोगपूर्वत्वात् उतश्च प्रत्ययादिति हेर्लुङ् न ॥ राधो हिंसायाम् ॥ अत इत्यनुवर्तमानेपि सामर्थ्यादकारमात्र स्थानित्वेनाश्रीयते ॥ अश्नोतेश्च ॥ तस्मान्नुडित्यनुवर्तत इत्याह । दीर्घादिति । श्नुविकरणनिर्देशः किम् । क्रयादेः अश भोजन इत्यस्य मा भूत् । आश । आशतुः ॥ जिधृषा । धृष्णोति प्रगल्भते इति धृष्णक् । धृष्णुपौ । ऋत्विग्दधृगिति क्विनो विधानादन्यत्रापि पदान्तविषये कुत्वम् ॥ दम्भु । लोकवञ्चनाय विहितकर्मानुष्ठानं दम्भः ॥ तृप । अयं सेट्कः । अनुदात्तेषु श्यना निर्देशात् ॥ अह व्याप्तौ । अस्मात् ऋहलोर्ण्यदिति ण्यति अह्य इति तस्यादित उदात्तमर्द्धह्रस्वमित्यत्राप्त्राभिरुपपादितम् ॥ अन्ये त्वाहुः । शतचक्रं योह्योवर्तनि इत्यत्र अह्य इति षष्ठ्यन्तमेव । वेर्ङितीति गुणस्तु अहिशब्दस्य च्छान्दसत्वान्नेति ॥ रिक्ष । एते षड् धातवः । एक एव अजादिरिति मते तु पञ्च धातवः ॥

इति स्वादयः ॥

तुदतीति । परमपि लघूपधगुणं बाधित्वा नित्यत्वात् श इत्येके ॥ अकृतव्यूहपरिभाषया गुणो न प्रवर्तत इत्यन्ये ॥ भ्रस्ज पाके ॥ भर्जनरूपः पाकोऽत्र धात्वर्थो, न त्वोदनादेः पाकः, तत्र प्रयोगाभावादित्याहुः ॥ भ्रस्जो इति केषांचित् पाठे तु ओदितश्चेति निष्ठानत्वप्रसक्त्या भृष्टः भृष्टवानिति न सिध्येत् ॥ भ्रस्जो रोपधयोः ॥ रम्यकार उच्चारणार्थः । रमित्यस्य अन्त्याचः परत्वे रोपधयोरिति षष्ठीनिर्देशस्य वैयर्थ्यमाशङ्कयाह ॥ निवृत्तिरिति ॥ अयं भावः । स्थानविशेषलाभाय मित्त्वस्य करणान्न रोपधयोः स्थाने रम् भवति । यत्र ह्यनिर्धारितः स्थानषष्ठ्या निर्दिश्य विधीयते स तत्स्थाने भवति । यथा

इको यणचीत्यादौ यणादिः । प्रकृते तु रमो निर्दिष्टस्थानिकत्वाद्रोपधयोः स्थाने न भवति ।, एवं चास्य आदेशागमत्वे भवतो यथा श्नमः प्रत्ययागमत्वे इति ॥ अन्ये त्वेतादृग् व्याख्यानमयुक्तमिति मत्वा सन' क्तिचीत्यतो लोपमनुवर्त्य भ्रस्जो रोपधयोर्लोपः, रम् तु आगम एवेत्याहुः ॥ अपरे तु भ्रस्जो रसरन्यतरस्यामित्येव सूत्रमस्तु । रसः ऋ इति च्छेदः । रस इति रेफाकारसकाराणां यः संघातस्तस्य ऋ इत्यादेशः स्यादित्यर्थः । ततश्च अक्ङिति भर्जको भर्जनं बभर्जेत्यादि सिध्यति । ऋकाराभावपक्षे तु भ्रज्जको भृज्जन बभृज्जेत्यादि । क्ङिति तु ऋकारपक्षे भृष्टिः भृज्यादित्यादि । तदभावे सम्प्रसारणे सति तदेव रूपम् । एवं च बरीभृज्यत इत्यादौ रीको रेफस्य निवृत्तिं वारयितुम् अनुदात्तोपदेशेत्यत उपदेशग्रहणमनुवर्त्यम् । इदानीं तु नानुवर्त्यं क्ङिति रमागम बाधित्वा संप्रसारणमिति पूर्वविप्रतिषेधश्च न कर्तव्य इति महदेव लाघवमित्याहुः ॥ इदं च रसोर्वचनात्सिद्धमिति वार्तिकाशयवर्णनमेव, न त्वपूर्वम् । र्वचनादित्यस्य वाऋवचनादिति च्छेदः । भाष्यकारैस्तु सूत्र भिद्यते यथान्यासमेवास्तु इति वदद्भिरस्यां कल्पनायां दुष्टत्वं सूचितम् । तच्च मनोरमायां स्पष्टमेव । तथा हि रेफाकारसकारसमुदायस्य ऋभावे पञ्च दोषाः । असंयोगाल्लिटि बभर्जतुः बभर्जुरित्यादीष्यते । बभृजतुर्बभृजुरित्यादि स्यात् । न चात्र गुणेन निर्वाहः । ऋभावे सति असंयोगाल्लिट् किदिति कित्त्वप्रवृत्त्या तन्निषेधात् ॥ सनीवंतेति इड्विकल्पाद्विभर्क्षतीत्यादि स्यात् । ऋभावे हलन्ताच्चेति सनः कित्त्वप्रवृत्तेः । लिङ्सिचोरात्मनेपदेषु भर्क्षीष्ट । अभर्ष्टेत्यादीष्यते । भृक्षीष्ट, अभृष्ट, इत्यादि स्यात् लिङ्सिचावात्मनेपदेष्विति कित्त्वात् । णिजन्ताच्चङि अबभर्जदितीष्यते अबीभृजदित्यपि स्यात् । इररारामपवादत्वेन उर्ऋदिति ऋत्त्वप्रवृत्तौ सन्वल्लघुनीति सन्वद्भावात् सन्यत इतीत्त्वे दीर्घो लघोरिति प्रवृत्तेः । यद्यपि उर्ऋदित्यस्य वैकल्पिकत्वादबभर्जदिति सिध्यत्येव, तथापि पक्षे अबीभृजदित्यनिष्टं स्यादिति बोध्यम् ॥ ऋजि भृजी भर्जन इति भ्वादेस्तादृशं रूपमिष्टमिति चेत् ॥ मैवम् । भर्जनार्थे हि तादृग्रूपमिष्टं न तु पाकसामान्ये । उभयोरेकार्थत्वाभ्युपगमेपि प्राचीनाश्चत्वारो दोषास्तु दृढा एव । न हि तेऽपि धात्वन्तरेण सुपरिहाराः । असंयोगाल्लिटि भृजेरपि धातोर्गुणाभावादनुदात्तत्वेन आत्मनेपदित्वाच्च बभर्जतुरित्यादिरूपस्य तेनाप्यसिद्धेः । तथा भृजेरुदात्तत्वेन ततः परेषां सँल्लिङ्सिचामिडागमध्रौव्यात् । बिभर्जति भर्क्षीष्ट अभर्ष्टेत्यादिरपि तेन न सिध्यति । एतेन भ्रस्जेर्भृजिरादेश इति पक्षोपि निरस्तः । पूर्वोक्तदूषणगणप्रसङ्गात् । किं च अस्मिन्

पक्षे यङ्लुकि अधिको दोषः । वधादेशवत्साभ्यासस्य भृज्जादेशे पुनर्द्विर्वचनस्य दुर्लभत्वात् । स्थानिवत्त्वेन अनभ्यासस्येति निषेधात् । स्वीकृतेऽपि द्विर्वचने रुग्रिकौ-कोभ्यासस्य लुरेवेति रुगादिरहितं बाभर्जिष्यतीत्यादि रूपं नैव सिध्येत् ॥ यदि तु लाघवे पक्षपातेन स्वातन्त्र्यं चिकीर्षति । तर्हि भ्रस्जि रसोरिति पठित्वा रसिति समुदायस्य अरेव विधीयतां तथा च न कोपि दोष इति ॥ अयमत्र संग्रहः ॥ रस ऋत्त्वे दपिक्ङित्सन्लिङ्सिच्चङ्परणित्सु ते । दोषो भ्रस्जेर्भ्रजौ चैव दोषो यङ्लुकि चाधिकः ॥ साभ्यासस्य हि भृजभावो भवेद्धन्तेर्वधिर्यथा । द्वित्वं पुनर्न लभ्येत स्थानिवत्त्वाद्वधेरिव ॥ तस्मादस्तु यथान्यासं स्वातन्त्र्योऽस्तु रसोरिति ॥ पूर्वविप्रतिषेधेनेति । नित्यत्वादित्यपि सुवचम् । न च संप्रसारणात् पूर्वं धातो रेफस्य, पश्चात्तु रमागमे रेफस्येति शब्दान्तरप्राप्त्या संप्रसारणस्य नित्यत्व नेति भ्रमम् । लक्ष्यानुरोधेन कृताकृतप्रसङ्गित्वेनापि क्वचिन्नित्यत्वस्वीकारात् ॥ विज इट् ॥ इह ह्विर्यस्या इति सूत्रान्मण्डूकप्लुत्या यस्यादिरिति अनुवर्तते, तेन इडादिप्रत्ययो लभ्यत इति मनोरमायां स्थितम् ॥ नव्यास्तु इह इडित्यनेन उत्तमैकवचनं न गृह्यते । तथा च सति विजिषोयेत्यत्रैव स्यान्न तूद्विजितेत्यादौ । ततश्चेष्टसिद्ध्यर्थमिडागमो गृह्यते तस्य तु ङित्त्व व्यर्थम् । तन्निमित्तगुणस्याप्राप्तेः । अतो लक्षणया इड्वान् गृह्यते । इट्प्रत्ययस्यादिरिति फलितार्थकथनम् ॥ इडादिप्रत्ययो ङिद्वदिति । एवं च इडादिरिति लाभाय यस्यादिरित्यनुवर्तनक्लेशो व्यर्थ एवेत्याहुः ॥ इह ओविजीति तुदादिः रुधादिश्च गृह्यते, न तु विजिर् पृथग्भाव इति जुहोत्यादिर्व्याख्यानात् । यस्त्वत्र हरदत्तेन जुहोत्यादेरग्रहणे हेतुरुक्तः तस्यानिट्कत्वादिति ॥ तदयुक्तम् । क्रादिनियमेन लिटि इट्संभवात् । न च तत्र कित्त्वेन गतार्थत्वादिटो ङित्त्वं व्यर्थमिति वाच्यम् । असंयोगाल्लिट् कित्त्वेऽपि विवेजिथेत्यत्र पित्त्वेन ङित्त्वाभावात् ॥ वव्रश्चेति । अत्र नव्याः । वव्रश्चेत्यादौ लिट्यभ्यासस्येत्यभ्यासावयवयोर्द्वयोरपि यणोः सम्प्रसारणप्रसक्तौ पूर्वस्य यणो निषेधाय न सम्प्रसारण इति सूत्रं स्वीक्रियते । ततश्च अत एव ज्ञापकात् परस्य प्रथमं सम्प्रसारणमिति परिकल्प्य आपादपरिसमाप्तेरङ्गाधिकार इति पक्षमभ्युपगम्य उरदत्त्वस्याङ्गाक्षिप्तप्रत्ययनिमित्तकत्वस्वीकाराद् अचः परस्मिन्निति स्थानिवद्भावप्रवृत्त्या सम्प्रसारणपरत्वमाश्रित्यवकारस्य संप्रसारणनिषेधः कथंचिदुपपाद्यते परस्य सम्प्रसारणम् परस्य यणः संप्रसारणं इति वा सूत्रिते परस्यैव संप्रसारणं न तु पूर्वस्य यण इत्यर्थलाभादुक्तक्लेशं विनैव वव्रश्च यून इत्यादि सर्वं सिध्यति ॥ नचैवं लिटि वयो य वेञ इत्यत्र संप्रसारणनिषेधाय ह्नञोऽनुव-

त्तिर्न लभ्येतेति वाच्यम् । न लिटि वयो य इति सूत्रकरणे बाधकाभावात् न संप्रसारण इति यथाश्रुतसूत्रप्रणयने त्वन्ततो गत्वा मात्राद्वयस्याधिक्याच्च । एवं च लघूपायेनेष्टसिद्धौ न सम्प्रसारण इति सूत्रारम्भो ज्ञापयति निमित्तभेदाभावेपि स्थानिभेदे पुनरपि कार्यं प्रवर्तत इति । तथा च सुध्युपास्य इत्यादौ उकारात्परस्य धकारस्य द्वित्वे कृते पुनरकारात्परस्य दकारस्यापि द्वित्वमिति प्रक्रियाकारादिव्याख्यानं सूत्रकाराभिप्रेतमेव ॥ यदि स्थानिभेदेपि निमित्तैक्ये कार्याप्रवृत्तिः क्वचिद् दृश्यते, तत्र तु ज्ञापकसिद्धं न सर्वत्रेति स दोषः परिक्रियतामित्याहुः ॥ अव्रश्चीदिति । ऊदित्त्वात् पक्षे इट् वदव्रजेति वृद्धिः नेटीति निषेधः ॥ अव्रक्षदिति । स्कोरिति सलोपः व्रश्च इति षः । षढोरिति कः । ततः सस्य षत्वम् । न चात्र सकारस्य कथं लोप इति वाच्यम् । धातुपाठे सकारस्य पाठात् । तदाहुः । नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजः इति ॥ व्यच । व्याजीकरणं छद्मकरणम् ॥ पर्युदासेनेति । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽसमर्थसमासश्च प्रसज्येतेति भावः ॥ कृन्मात्रविषयत्वादिति । तेन उद्विचिता उद्विचितुमित्यत्र संप्रसारणं भवति । व्यचितेत्यादौ तु तिङ्विषयं न भवति । विव्याचेत्यत्र कुटादित्वे जातेपि न क्षतिः । गाङ्कुटादिभ्य इति सूत्रे अञ्णितः प्रत्यया ङितः स्युरिति उक्तत्वात् । उत्तमे णलि तु णित्त्वाभावपक्षे ङित्त्वात् संप्रसारणे विव्यचेति न सिध्येदिति अनसीति पर्युदास आवश्यक इति बोध्यम् ॥ उछि उञ्छे । उछी विवासे । इमौ भ्वादिगणे व्याख्यातौ । इह पाठस्तु उञ्छतीत्यत्र आच्छीनद्योरिति नुम्विकल्पार्थः । पूर्वपाठस्तु स्वरार्थः । तथा हि । उञ्छति उच्छतीत्यादौ पिद्वचने शप्तिबादीनां पित्त्वात् अनुदात्तत्वे धातुस्वरेण आद्युदात्तं पदम् । शे तु प्रत्ययस्वरेण मध्योदात्तमिति । न च सतिशिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वक्ष्यमाणत्वात् कथमिह मध्योदात्ततेति वाच्यम् । कुरुत इत्यादौ तसादेर्विकरणात् परत्वेन तत्स्वरस्योदात्तस्य विकरणस्वरापेक्षया प्रबलत्वेपि शस्य धातोः परत्वेन धातुस्वरापेक्षया शस्वरस्योदात्तस्य प्रबलत्वात् ॥ उपलक्षणत्वादिति । अत एव अदुपधस्य चेद् अश्नोतेरेवेति नियममाश्रित्य द्विहल्ग्रहणं भाष्यकारैः प्रत्याख्यातम् ॥ अन्यथा तत्र संगच्छेतेति भावः ॥ आनर्च्छेति । अनृच्छ इति पयुदासान्नाम् ॥ नव्यास्तु ऋच्छत्यृतामिति लिटि परे गुणविधानसामर्थ्यादामभावः सिद्ध इति इजादेरिति सूत्रे अनृच्छ इत्येतत्स्पष्टप्रतिपत्त्यर्थमित्याहुः ॥ अन्ये तु ऋच्छत्यृतामित्यत्र तौदादिकऋच्छेरिति सर्वैरेव

व्याख्यातत्वात् गणान्तरेपि क्वचिद्विकरस्तीत्यनुमीयते तद्धातोस्तु लिट्याम्निवारणाय अनृच्छ इत्येतदावश्यकमित्याहुः ॥ मिच्छ । उत्कटः क्लेशः उत्क्लेशः ॥ ऋच स्तुतौ । ऋच्यते स्तूयते देवतादिकमनयेति ऋक् । बाहुलकादिह करणे क्विप् ॥ लोभिता । लोब्धा । तीषसहेति वेट् ॥ शिशुं न विप्रा इति । नशब्द इवार्थे । विप्रा ब्राह्मणाः शिशुमिव मतिभी रिहन्ति हिंसन्ति न्यूनीकुर्वन्तीत्यर्थः ॥ चृती हिंसाग्रन्थनयोः । ईदित्करणं श्वीदितो निष्ठायामिति इण्निषेधार्थम् । यद्यप्यस्य वेट्कत्वान्निष्टायामिण्निषेधः सिध्यति । तथापि यस्य विभाषा इत्यस्यानित्यतां ज्ञापयितुमीदित्करणम् । तेन धावितमिभराजधिया इत्यादि सिद्धमित्याहुः ॥ कुर शब्दे । करोतेरेवेति । सुप्रसिद्धत्वात् । कुर्यादित्युक्ते हि लोकानां कृञ एवोपस्थितिर्भवति न त्वस्येति भावः ॥ मुर संवेष्टने । इगुपधलक्षणः कः । मुरो दैत्यः मुरारिर्विष्णुः ॥ क्षुर विलेखने । विलेखनं छेदनम् । केशान् क्षुरति । इगुपधेति कः । क्षुरः शस्त्रम् ॥ तिल स्नेहने ॥ तिलति । इगुपध इति कप्रत्यये तिलः । तिल गतौ तेलति अपि ॥ लिख अक्षरविन्यासे । लिखितुं लिखिष्यतीति प्रयोगः प्रामादिकः ॥ यत्तु कैश्चित् कुटस्यादिः कुटादिः, कुट आदिर्येषां ते कुटादयः, कुटादिश्च कुटादयश्च कुटादयः इत्येकशेषं स्वीकृत्य लिखितुमित्यादि समर्थितम् ॥ तदसत् । लेखिता लेखिष्यतीत्यादौ गुणनिषेधापत्तेः । न चेष्टापत्तिः । वृत्तिकारहरदत्तादिग्रन्थविरोधात् । गाङ्लिखादिभ्य इत्येव सूत्रितव्ये कुटादिभ्य इति पठनस्य स्वारस्यभङ्गापत्तेश्च । किं च शकुनिष्वालेखन इति सौत्रप्रयोगोऽपि विरुध्यत इति प्रागेवोक्तमित्यास्तां तावत् ॥ लिखाययतीति प्रयोगस्तु मनोरमायामित्थं समर्थितः । आयनम् आयः प्राप्तिः लिखस्यायो लिखायस्तं करोति । स्फुट विकसने । स्फुटत्यर्थोऽस्मादिति स्फोटः । स च पदस्फोटवाक्यस्फोटादिभेदेन अनेकविधः ॥ कड मदे । कुटादिकार्याभावेऽपि डान्तानुरोधेनायं कुटादौ पठितः । भ्वादौ पठितस्य पुनरत्र पाठः शतरि नुम्विकल्पार्थः । पूर्वः पाठस्तु उच्छतीत्यादाविव कडतीत्यादौ आद्युदात्तार्थः ॥ स्फुरतिस्फुलत्योः ॥ सिवादीनामित्यतो वेत्यनुवर्तनादाह । षत्वं वा स्यादिति । परिस्फूर्तति । श्युकः कितीतीण्निषेधः ॥ म्रियतेर्लुङ्लिङोश्च ॥ चात् शित इति अनुकृष्यते तदाह । शितश्च प्रकृतिभूतादिति ॥ तङिति । आत्मनेपदमित्यर्थः । तेन म्रियमाण इति सिद्धम् । स्वरार्थमिति । मा हि मृदित्यत्र तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमित्यनेन ङितः परस्य लादेशसार्वधातुकस्यानुदात्तत्वे कृते धातुरुदात्तः । ङि-

स्वाभावे तु प्रत्ययस्योदात्तत्वे धातुरनुदात्त स्यात् । न च सिज्लोपस्यासिद्धत्वात् ङितः परत्वं लसार्वधातुकस्य दुरुपपादत्वमिति तस्य कथमनुदात्तता स्यादिति शङ्क्यम् । ङित्वसामर्थ्यात् शिज्लोपस्यासिद्धत्वं नेति सुवचत्वात् । अमृतेत्यत्राडागमस्यैवोदात्तत्वात् मृङो ङित्त्वस्य न किंचित् प्रयोजनमिति अण्निवारणाय मा हि मृतेति माङः प्रयोगे तिङ्ङतिङ इति तिङन्तनिघातेऽपि ङित्त्वं व्यर्थमेव स्याद् इति हिशब्दप्रयोगे तु हि चेत्यनेन तिङन्तनिघातनिषेधादिष्टस्वरः सिध्यतीति बोध्यम् ॥ रि पि गतौ । रपरत्वाल्लघूपधगुणः स्यादित्याशङ्कायामाह । अन्तरङ्गत्वादिति ॥ किरतौ लवने ॥ उपात् प्रतियत्नेति सूत्रादुपादिति वर्तते ॥ लवने किम् ॥ उपकिरति ॥ हिंसायां प्रतेश्च । चादुपात् ॥ उरो विदारं प्रतिचस्करे नखैरिति माघः । कर्मणि लिट् । ऋच्छत्यृतामिति गुणः ॥ दृङ् आदरे । तथाद्रियन्ते न बुधाः सुधामपीति श्रीहर्षः ॥ प्रच्छ ज्ञीप्सायाम् । ज्ञातुमिच्छा ज्ञीप्सा । अत्र ज्ञपिर्ज्ञाने । आप्ज्ञप्यृधामीदत्र लोप इत्यभ्यासलोपः । ण्वुलि । प्रच्छकः ॥ पृच्छाशब्दात् तत्करोतीति णिजन्तात् ण्वुलि तु पृच्छकः । पृच्छाशब्दस्तु भिदादेराकृतिगणत्वादङि संप्रसारणे बोध्यः ॥ किरादयो वृत्ता इति । एते च भूषाकर्मकिरादिसनामिति वक्ष्यमाणयक्चिणादिनिषेधवार्तिके उपयोक्ष्यन्ते । किरश्च पञ्चभ्यः इत्यत्र पञ्चभ्य इत्येतदुत्तरसूत्रेऽनुवृत्त्यर्थमिति बोध्यम् ॥ ससर्जिथेति । विभाषा सृजिदृशोरिति थलि वेट् ॥ विच्छ गतौ । तुदादिपाठसामर्थ्यादायप्रत्ययान्तादपि शो, न तु शप् । तेन विच्छायती, विच्छायन्ती इति नुम्विकल्पः । केचित्तु तुदादिपाठसामर्थ्यादायप्रत्ययस्य पाक्षिकत्वं स्वीकृत्य विच्छती, विच्छन्ती इति नुम्विकल्पम् विच्छति विच्छतः विच्छन्तीत्यादिरूपाणि चोदाजह्रुस्तेषां तु मते तुदादिपाठस्य केवले चरितार्थत्वादायप्रत्ययान्ताच्छबेव । तेन विच्छायन्ती इति नित्यमेव शप्श्यनोरिति नुम् ॥ पठितस्येति । अस्मिन्नेव गणे परस्मैपदिषु पठितस्येत्यर्थः ॥ तङर्थ इति । पूर्वपाठस्तु संक्षेपेण कर्त्रभिप्रायेपि परस्मैपदार्थः ॥ षिच क्षरणे । षिचिरिति केचिदिरितं पठन्ति । तत्तु फलाभावादुपेक्ष्यम् । इह लिपिसिचिह्वश्चेति च्लेरङ् विधीयते स चाप्राप्तविधिः । इरित्त्वे तु विकल्पेन प्राप्तौ नित्यार्थो विधिरिति फलाभावः ॥ पिंशत्विति । दीपयत्वित्यर्थः ॥

इति तुदादयः ॥

रुधादिभ्यः श्नम् ॥ प्रत्ययत्वेऽपि मित्त्वादन्त्यादचः परः । प्रत्यय-

सञ्ज्ञाफलं तु शस्येत्संज्ञा । शस्योच्चारणं तु श्नसोरल्लोप। श्नान्नलोपः इत्यत्र विशेषणार्थं न तु सार्वधातुकसंज्ञार्थं फलाभावात् । न चापित्सार्वधातुकस्य ङित्वे गुणनिषेधः फलमिति शङ्क्यम् । इगन्तस्याङ्गत्वाभावात् ॥ अरुण इति। सिपि दश्चेति रुर्वा । एवमभिन इत्यत्रापि ॥ उछृदिर् । उकारः क्त्वायामिड्विकल्पार्थः । छृत्वा । छर्दित्वा । इट्पक्षे न क्त्वा सेटिति किल्वनिषेधाद् गुणः ॥ श्नान्नलोपः ॥ अस्य मुख्योदाहरणम् । अनक्ति । श्नादित्युत्सृष्टमकारानुबन्धस्य श्नमो ग्रहणमित्याह । श्नमः परस्येति । एवं च यजयाचेति विश्नशब्दस्यामि नुटि विश्नानामित्यत्र लक्षणप्रतिपदोक्तप्रत्ययग्रहणपरिभाषयो' प्रवृत्त्या नलोपशङ्कैव नास्तीत्याहुः ॥ इन्धे । इन्त्से । श्नमो नकारस्यानुस्वारपरसवर्णौ । तृणह इम् ॥ तृह इति वक्तव्ये सश्नमो ग्रहणं विशेषविहितेन इमा श्नमो बाधो मा भूदित्येवमर्थम् । न च तौदादिकस्य तृह इत्यस्य व्यावृत्त्यर्थमेवास्त्विति शङ्क्यम् । ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानात् । नाभ्यस्तस्याचि पितीत्यतः पितीति उतो वृद्धिरित्यतो हलीति च वर्तते तदाह ॥ हलादौ पितीति । प्रत्ययलोपे प्रत्ययलक्षणमिति सूत्रस्थभाष्यकारीयनिष्कर्षे तु हलीति नानुवर्तते, किं तु पितीति अनुवर्तत एव । तेन तृढ इत्यत्र नातिप्रसङ्गः । न च हलीत्यननुवृत्तौ तृणहानीत्यत्रातिप्रसङ्ग इति वाच्यम् । अचि नेत्यनुवर्तनात् ॥ उन्दी । क्लेदनमार्द्रीभावः ॥ अञ्जू । व्यक्तिर्विवेचनम्, म्रक्षणं स्निग्धता ॥ अञ्जेः सिचि ॥ नित्यमिट् स्यादिति । विभाषाग्रहणं नानुवर्तत इति भावः ॥ सिचि किम् । अङ्क्ता ॥ पृची । ईदित्वान्निष्ठायां नेट् । पृक्तः । अपृक्त एकालित्यत्र नञ्पूर्वः ॥

इति रुधादयः ॥

अतनिष्ट अतानिष्टेति । तस्थस्थमिपामिति तादेशः । अतो हलादेरिति वा वृद्धिः ॥ अततेति । तनादिभ्यस्तथासोरिति सिज्लुक्यनुनासिकलोपः ॥ अतनिष्टेति । लुगभावपक्षे इट् ॥ षणु दाने । नान्तोऽयम्, णकारस्तु लाक्षणिकः । तेन यङ्लुकि संसन्ति इत्यादावनुस्वारपरसवर्णौ ॥ क्षणु हिंसायाम् क्षिणु च ॥ इमावपि लाक्षणिकणकारौ तेन चंक्षन्ति । चिक्षेन्ति इत्यत्रानुस्वारपरसवर्णौ ॥ सिचो लोप इति । न चास्मिन् पक्षे प्रत्ययलक्षणप्रवृत्त्या अक्षतेत्यत्र गुणः स्यादिति वाच्यम् । उश्चेति सिचः किल्वेन तन्निषेधात् ॥ संपर्युपेभ्य इति वृत्तिस्थपाठं विहाय भाष्यवार्तिका-

नुसारेणाह ॥ सपरिष्यामिति ॥

इति तनादयः ॥

एवं भस्याङ्गाव इति । आत्मनेपदेष्वनतः इत्यनेन ॥ सौत्रा इति । नकारोपधा इत्यपि ज्ञेयाः ॥ विष्टभ्नोतीति । अनिदितामिति नलोपः । स्तम्भे रिति षत्वम् ॥ वेः स्कभ्नातेर्नित्यम् ॥ सिवादीनां वेत्यतो वेति नानुवर्तते इति ध्वननार्थमिह नित्यग्रहणम् ॥ विष्कभ्नोतीति । स्कभ्नातेरित्यत्र श्नाविशिष्टं रूपं न विवक्षितम्, किं तु धातुमात्रम् । अन्यथा विष्कभितमित्यादावपि षत्वं न स्यात् । न चेष्टापत्तिः । माधवादिग्रन्थविरोधादिति भावः ॥ हल श्नः ॥ स्तभानेति । अतो हेः इत्यारम्भसामर्थ्यात् संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । अत एव जहीत्यत्र हिलोपवारणायेयं परिभाषा नोपन्यस्तेत्याहुः ॥ यत्तु कैश्चित् शानजादेशो धातुपाठपठितेभ्यः परस्य श्नो भवति, न तु सौत्रेभ्य इति व्याख्याय स्तभ्नीहीत्युदाहृतं तन्निष्प्रमाणं माधवादिग्रन्थविरुद्धं च ॥ प्वादीनां ह्रस्वः । ष्ठिवुक्लमुचमाम् इत्यतः शितीत्यनुवर्तत इत्याह ॥ शिति पर इति ॥ न लिङीति ॥ अनेन वॄत इटो लिङि दीर्घो नेति स्मारितम् । उदोष्ठय । दन्त्योष्ठ्योऽपि ओष्ठ्यग्रहणेन गृह्यत इत्याह ॥ वूर्यादिति ॥ वरिषीष्टेति । लिङ्सिचोरात्मनेपदेषु इति वेट् ॥ वूर्षीष्टेति । उश्च इति लिङ्सिचोः कित्त्वाद्गुणाभावे सत्युत्त्वम् ॥ हलः ॥ सम्प्रसारणस्य इत्यनुवर्तते, अङ्गस्य इत्यवयवषष्ठी । हल इति पञ्चमी तदेतदाह । अङ्गावयवादिति ॥ अङ्गावयवात् किम् । निरुतं दुरुतम् ॥ तदन्ताङ्गस्य किम् । विध्यति ॥ क्षीष्हिंसायाम् ॥ षित्त्वादङ् । क्षिया । हेति क्षियायाम् क्षियाशीः इत्यादौ क्षिया धर्मव्यतिक्रम आचारभेदः इति वक्ष्यति॥ दीर्घनिर्देशसामर्थ्यादिति । ननु दीर्घग्रहणेन अंगवृत्तपरिभाषा ज्ञाप्यत इत्याकरे स्थितम् । अन्यथा ज्ञाजनोर्जे विदध्यात् । अतो दीर्घो यञि इति दीर्घसिद्धेः । तथा च दीर्घनिर्देशसामर्थ्यस्योपक्षयात् कथमिह ह्रस्वाभावसिद्धिरिति चेद् ॥ अत्राहुः । ह्रस्वाभावे सत्येव दीर्घनिर्देश उक्तपरिभाषाया ज्ञापकः । सति तु ह्रस्वे पुनरंगकार्यं प्रवृत्तमेवेति न ज्ञापकः । तथा च ह्रस्वाभावसिद्धौ न किंचिद्बाधकमिति । किं च अंगवृत्तावविधिः इत्येव परिभाषाशरीरं तच्चोक्तज्ञापकात्सिद्धम् । यदि तु भ्यसोभ्यम् इति सूत्रे भाष्ये परिनिष्ठितस्य इत्येव पाठस्तर्हि स्वतन्त्रमेवेद वचनं, न तु ज्ञापकसिद्धमिति पक्षोऽपि युष्मदस्मच्छब्दगतमनोरमाग्रन्थादवगम्यते । तस्मिंस्तु पक्षे दीर्घग्रहणसामर्थ्यं नोपक्षीणमिति सम्यगेवायं ग्रन्थ इति ॥ केचित्तु संज्ञापूर्वकविधेरनित्यत्वान्न ह्रस्व इति व्याख्येयमित्याहुः ॥ बध्नातीति । अ-

